एवं प्रायशो वेङ्कटाचलमाहात्म्यपरेषु पुराणभागेषु स्वामिपुष्करिणीपश्चिम-
दक्षिणतीरयोः श्रीवराहदेवश्रीनिवासदेवयोः पृथगवस्थानं प्रतीयते ।

श्रीपाद्मपुराणेऽपि सप्तविंशाङ्कचिह्निते चतुर्थाध्याये—

"कदाचिद्भगवान्विष्णुः कारुण्यागण्यपुण्यधीः ।
दर्शयन् सकलाँल्लोकान् साक्षाद्दक्षिणपथं गतः ॥" इत्यारभ्य
"भक्तानुकम्पासहितः श्रीनिवासः परः पुमान् ।
आविर्बभूव भगवान् स्वामिपुष्करिणीतटे ॥" इत्यन्तेन

श्रीनिवासाविर्भावं प्रतिपाद्य ततः अष्टाविंशाङ्कचिह्निते पञ्चमाध्याये

"सिह्मसानुमतः कुत्र स्वामिपुष्करिणीतटे ।
श्वेतस्य पोत्रिपोतस्य प्रादुर्भावः कथं विभो ॥" इत्यारभ्य

श्रीवराहदेवाविर्भावं ततः पृथक् प्रस्तुत्य निरूप्य—

"तदाप्रभृति देवेशो वराहवपुरूर्जितः ।
पाताललोकाल्लोकेऽस्मिन् कौतूहलसमाकुलः ॥
स्वामिपुष्करिणीतीरे पश्चिमेऽस्मिन् धरातले ॥" इत्यादिना
"अध्यार्जमित्रोऽत्र पोत्री वनेन दिव्यगात्रभृत् ।
ह्लादयन्नात्मनस्सर्वान् ज्ञानानन्दमयान् गुणान् ॥" इत्यन्तेन

श्रीवराहदेवस्य स्वामिपुष्करिणीतीरे वसतिं । एकोनत्रिंशाङ्कचिह्निते षष्ठाध्याये—

"तदाप्रभृति देवेशो वराहवपुरात्मभूः ।
अनन्ताचलशृङ्गेऽन्तर्निक्षिप्ताङ्घ्रिसरोरुहः ॥
देव्या वसुधया सार्धं स्वामिपुष्करिणीतटे ।
सुखमास्ते सुरेशानः सुधीः रहसि सुन्दरः ॥" इति

श्रीवराहभगवतः स्थितिमुक्त्वा तदुत्तरमेव—

"श्रीनिवासोऽपि शेषाद्रौ ततः स्वामिसरस्तटे ।
निवसन्नात्मनः कुर्वन्नर्चानां सुखात्मनः ॥" इत्यारभ्य
"पुराणपुरुषो धाता पुरुषस्तमसः परः ।
वैकुण्ठं पर्यवसति त्यक्तवेदना हि तिष्ठति ॥" इत्यन्तेन

स्वामिपुष्करिणीतीरे वराहभगवदागमनात्पश्चात् किंचित्कालानन्तरं श्रीवैकुण्ठादागत्य तत्रैव स्वामिपुष्करिणीतीरे श्रीवराहदेवात्पार्थक्येन श्रीनिवासभगवतोऽवस्थितेश्च प्रतिपादनेन श्रीमहाविष्णुः श्रीवराहश्रीनिवासलक्षणाभ्यां द्वाभ्यां रूपाभ्यां स्वामिपुष्करिणीतीरे सदा सन्निहितो वर्तत इति स्पष्टमवगम्यते ।

यद्यपि पद्मपुराणे त्रयस्त्रिंशाङ्कचिह्निते दशमाध्याये --

पश्चिमे स्वामिसरसस्तीरे प्रत्यग्रविग्रहम् ।
विमानमाविर्बभूव विमलानन्दकारकम् ॥ इति

श्रीनिवासविमानाविर्भावः । तत उपरिष्टात् --

"स्वामिपुष्करिणीतीरे पश्चिमे भृत्यपश्चिमे ।
बृन्दारकाणां बृन्दैस्तु प्रार्थितो लोकरक्षकः ॥
आविर्बभूव भगवान् श्रीनिवासः परः पुमान् ॥ इति

श्रीनिवासाविर्भावश्च स्वामिपुष्करिणीपश्चिमतीरे जात इति प्रतिपाद्यते । अन्यपुराणेषु च दक्षिणतीरे जात इति प्रतिपाद्यत इति किंचिद्भेदोऽवगम्यते ॥ तथापि श्रीनिवासतद्विमानयोराविर्भावस्य स्वामिपुष्करणीदक्षिणपश्चिमभाग एव जातत्वेन तादृशस्थानस्य दक्षिणत्वेन पश्चिमत्वेन च निर्देशयोग्यत्वान्न विरोध इति बोध्यम् ॥

एवं मार्कण्डेयपुराणेऽपि प्रथमाध्याये

तस्यानुभावं प्रवदामि भूयः
समस्ततीर्थानि भवन्ति तत्र ।
एवं समस्तेषु च मुख्यतीर्थं
श्रीस्वामिनामास्ति सरोवरं तत् ॥
माहात्म्यमेतस्य मयोच्यते कथं
यत्पश्चिमे राजसि भूवराहः ।
आलिङ्ग्य कान्तामतिसौम्यमूर्ति-
र्विराजते विश्वजनोपकारी ॥
तद्दक्षिणतटे रम्ये वैकुण्ठपुरवल्लभः ।
आलिङ्गितवपुर्लक्ष्म्या वरदो वर्तते चिरम् ॥" इति

भविष्योत्तर पुराण तृतीयाध्याये —

एव तीर्थवरा तत्र स्वामिपुष्करिणी शुभा ।
तस्या पश्चिमदिग्भागे वराहवदनो हरि ॥
धरामालिंग्य वल्मीक आस्ते पिप्पलराजित ॥ इति ।
इत्थ विचार्यमाणे तु स्वामिपुष्करिणी तटे ।
दक्षिणे विमल दिव्य वल्मीक दृष्टवान्मुदा ॥
तिन्त्रिणी वृक्षमूलस्थ भगवान जगदीश्वर ।
मत्वेद परम स्थान तत्र लीनाऽभवद्धरि ॥

इति च द्विरूपस्य भगवत स्थलद्वये अवस्थान स्पष्टमुक्तम ॥

स्कन्दपुराणान्तर्गत प्रथमभाग सप्तमाध्यायेऽपि दर्शितमार्कण्डेयपुराणसमानानुपूर्वीकाण्येव वचनानि दृश्यन्ते । तत्रैव प्रथमाध्यायस्थितै प्राग्द्वितीयस्तबक चतुर्दशवाक्यादाहृतैर्वचनै स्कन्दपुराणद्वितीय भागात्मक सप्तत्रिंशाङ्कचिह्निताध्यायस्थितै —

त गत्वा वेङ्कट शैल स्वामिपुष्करिणीजले ।
मुनेन साक विप्रेन्द्र सस्नौ नियमपूर्वकम ॥
वराहस्वामिन नत्वा श्रीनिवासालय गत ।
प्रदक्षिण तत कृत्वा विमान सप्रणम्य च ॥
पद्मनाभोऽथ पुत्रेण केशवेन दुरात्मना ।
पपौ कटाह तीर्थं तद्ब्रह्महत्यादिनाशकम् ॥

इति वचनैश्च श्रीवेङ्कटाद्रौ श्रीस्वामिपुष्करिणीतीरे द्विरूपस्य भगवत पृथगवस्थान स्फुटतरमवगम्यते ।

एव ब्रह्मोत्तरखण्डान्तर्गतपञ्चाशाध्यायस्थेन—

"स्वामितीर्थमिति ख्यात सर्वतीर्थोत्तमोत्तमम ।
तत्तीरे दक्षिणे विष्णुर्लक्ष्म्या सह विनोदते॥" इति

वचनेन स्वामिपुष्करीणीतीरे लक्ष्म्या सह भगवत श्रीनिवासस्य सद्भाव ॥

सप्तत्रिंशाङ्कचिह्नते वामनपुराणाष्टादशाध्याये—

" मुनयस्तेऽथ भूपाल तद्वाक्यसमनन्तरम् ।
दद्दशुर्विमलं दिव्यं विमानं भास्करोपमम् ॥
स्वामिपुष्करिणीतीरे दक्षिणे लोकविश्रुतं ।
नारायणाश्रितं दिव्यं नित्यं च महदद्भुतम् ॥ " इति

तत्र सविमानश्रीनिवासाविर्भावश्च स्फुटमवगम्यते ।

एवं स्कन्दपुराणभागद्वये वामनपुराणे पुराणान्तरेषु च श्वेतवराहश्रीनिवासाविर्भावो पार्थक्येन प्रतिपाद्यो द्रष्टव्यो ॥

एवं भविष्योत्तरपुराणादिषु श्रीवराहभगवतः श्रीनिवासदेवस्य च परस्परसंवादः, श्रीनिवासदेवस्य आकाशराजकन्यापरिणयः तदर्थं श्रीनिवासेन भूमिसहितवराहभगवतः आह्वानंचेत्येवमादीनि बहूनि विचित्राणि विपुलानि चरित्राणि प्रतिपाद्यमानानि द्विरूपस्य भगवतः श्रीवेङ्कटाद्रिश्रीस्वामिपुष्करिणीतीरवासित्वं प्रस्फुटमेवावगमयन्तीति न श्रीनिवासदेवस्य अपह्नवः केनचित्कर्तुं शक्यः ।

एवं प्रथमस्तबकोदाहृताया अरायिकाणेत्यादिश्रुतौ शिरिबिठस्येति श्रीनिवासवाचकशब्दप्रयोगोऽपि वराहदेवात्पार्थक्येनास्मिन् गिरौ श्रीनिवासदेवसद्भावे पर्याप्तं प्रमाणं भवितुमर्हति ।

एवमस्य देवस्य परिदृश्यमानैर्लिङ्गैरयं देवो न स्कन्दः अपितु भगवानेव विष्णुरिति निरूप्यते । स्वामिपुष्करिणीदक्षिणतीरे संप्रति विराजमानस्य हि देवस्य चत्वारो बाहवो दृश्यन्ते । चतुर्बाहुत्वं च भगवत एव प्रसिद्धम् । न क्वचित् स्कन्दस्येति नासौ स्कन्दः । यथोक्तं वामनपुराणे एकविंशाङ्कचिह्नित द्वितीयाध्याये बृहस्पतिकृतस्कन्दस्तुतौ —

एकवक्त्रो द्विबाहुश्च कुमारः पुरुषोत्तमः ।
मातृप्रीत्या च षड्वक्त्रः पार्वतीप्रीतिवर्धनः ॥ इति

अत्र हि स्वभावतः एकवक्त्रत्वं द्विबाहुत्वं च अभिधाय स्तन्यदायिषण्मातृप्रीतिबलात् षण्मुखत्वं जातमिति वक्त्रसंख्याधिक्यमौपाधिकमभिधाय तद्गानुगुण्येन " द्वादशहस्तविराजितदेहः " इत्यौपाधिकमपि वा द्वादशत्वलक्षणबाहुसंख्याधिक्यमेव वा अभिहितं न चतुष्ट्वलक्षणबाहुसंख्याधिक्यमसि ।

यद्यप्यस्य देवस्य स्कन्दत्वमभ्युपगम्य तपोऽवस्थाया आयुधप्रहाणेन निरा-युधपाणित्वमुपपद्यत इति समर्थनम्, तदप्यसाधु। अधिकारिविशेषस्य तपोऽनुष्ठा-नार्थं वनं गच्छतोऽपि दुष्टजन्तुदूरीकरणार्थं स्वाधिकारप्राप्तायुधसद्भावस्य अदुष्ट-त्वात् आवश्यकत्वाच्च, देवसेनाधिपत्यलक्षण अधिकारविशेषभाजोऽस्य स्वायुधप्रहा-णायोगात् ॥

प्रतिपद्यते हि श्रीरामायणभारतादिषु रामलक्ष्मणभरतार्जुनादीना अरण्या-दिषु जटिलत्वादिलक्षणतपोऽवस्थाजुषामपि स्वाधिकारप्राप्तधनुस्तूणीराद्यायुध-धारिता ॥

दुर्गविशाङ्कविहिते दर्शितवामनपुराणतृतीयाध्याये तपश्चर्यार्थं वेङ्कटाचलं प्रति प्रस्थितस्यास्य स्कन्दस्य आयुधधरत्वमेव प्रतिपाद्यते न तु तत्प्रहाणं क्वचित्। यथोक्तं तत्र—

“ तपसेऽर्थे प्रयाते तु स्कन्दे काञ्चनसंनिभे।

देवसेनासमायुक्ते धनुश्शक्तिधरे द्विजा ॥ इति।

उत्तरत्रापि न क्वचिदस्य आयुधप्रहाणं पुराणप्रतिपन्नम्। अयं च देव आयुधधार-णार्हाभ्यां ऊर्ध्वाभ्यां बाहुभ्यां वरप्रदानायतेन अपरेण दक्षिणेन पाणिना स्वचर-णारविन्दयुगलं प्राप्यप्रापकतया प्रदर्शयता अपरेण कटिन्यस्तेन वामेन पाणिना स्वाश्रितानां भवजलधेः कटिदघ्नत्वं सूचयता च विराजते। ईदृशश्चावयवसन्निवेश-विशेषः, शङ्खचक्रधरस्य, भवजलधिनिमज्जितान्मुमुक्षुजनानपास्य दिव्यचरणनलिनयुग-लस्य, निखिललोकाराध्यवैभवस्य, भगवतो नारायणस्यैव युज्यते। न पुनः स्वपातक-हरणार्थं तपश्चर्यापरायणस्य आराधकता वैधेयतावसेयस्यास्य स्कन्दस्यायं सन्निवेशः कथंचिदपि युज्यते।

किं बहुना दक्षिणवक्षस्स्थलदृश्याभ्यां श्रीदेवीश्रीवत्साङ्काभ्यां अनितरसाधा-रणलाञ्छनाभ्यामयं देवः श्रीमहाविष्णुरिति मन्दमतिभिरपि सुनिर्णयोऽयमंशः ॥ पुराणस्थेषु श्रीनिवासदेवस्वरूपप्रतिपादनपरघट्टेषु च श्रीनिवासभगवत उपदर्शितः परिदृश्यमानावयवसन्निवेशविशेषादिकः स्फुटतरं प्रतीयते ॥

यथोक्तं श्रीवराहपुराणप्रथमभागे सप्तचत्वारिंशाङ्कचिह्निते पञ्चदशाध्याये—

" केयूराङ्गदसद्भूष वृत्तायतचतुर्भुजम् ।
ज्वालायुतसहस्रारसुदर्शनधर परम् ॥
शरच्चन्द्रप्रतीकाशपाञ्चजन्यधर शुभम् ।
अश्रान्तवरदानोद्यद्दक्षपाणिसरोरुहम् ॥
कटीतटसुविन्यस्तवामपाणिजलेरुहम् ॥ " इति ॥

अत्र चतुर्भुजमित्युक्तभुजचतुष्टयस्य विन्यासविशेषप्रदर्शनपर ज्वालायुतेत्याद्युपरितन पादचतुष्टयम् ॥

पाद्मपुराणे त्रयस्त्रिंशाङ्कचिह्निते दशमाध्याये—

" चतुर्भुजश्शङ्खचक्रवरावनतिहस्तक ।
श्रीवत्सकौस्तुभोरस्को वैजयन्त्या विराजित ॥ " इत्युक्तम् ॥

अत्र वरशब्देन वरदानमुद्रा अवनतिशब्देन कटितटविन्यासलक्षणावनतिमुद्रा च विवक्षिता । समानप्रकरणवचनान्तरैककण्ठ्यात् ॥ त्रिषष्ठितमाङ्कचिह्निते गारुड-पुराणाध्याये—

" अरुन्धती महाभागा लक्ष्म्यालिगितवक्षसम ।
दृष्ट्वा हरि वेङ्कटेश प्रणनाम मुदान्विता ॥ "

इत्यनेन तदुपरितनेन अरुन्धतीस्तोत्रगतेन—

यस्योरस्यनिश विभाति जगतीसौभाग्यधात्री रमा-
धत्ते यस्य पदावनेजनजलमूर्ध्ना पुरारिस्सदा ।
श्रीमद्वेकटशैलनित्यनिलय देवोत्तम त्वा विना-
दृष्टादृष्टफलप्रद किमपर दृष्ट क्षितौ दैवतम् ॥ "

इति वचनेन च श्रीवेङ्कटेश साक्षात्कुर्वन्त्या अरुन्धत्या श्रीनिवास लक्ष्म्यालिगित-वक्षस्कत्ववेषेण दृष्ट इति स्पष्टमवगम्यते । ब्रह्माण्डपुराण नवमाध्याये चक्रवर्तिन श्रीनिवाससाक्षात्कारघट्टे --

" तन्मध्येऽसौ नीलजीमूतकल्प
पद्मावास सश्रितत्राणहेतुम् ।

श्रीवत्साङ्क पुण्डरीकायताक्ष
शख चक्र धारयन्त कराभ्याम् ॥
दातार त पाणिना वै वराणा-
मन्येनाङ्क बिभ्रत भ्राजमानम् ।
पीत वस्त्र बिभ्रत राजमान
कोटीरान्तप्रोतरत्नोपशोभम् ॥
शान्ताकार शाश्वत श्रीनिवास
मेव्य देवैर्वासुदेव ददर्श ॥

इत्यनेन लक्ष्मीश्रीवत्सौ वक्षोलक्षणे शङ्खचक्रवरदानमुद्रा, कटितटविन्यासमुद्रारूपाणि भुजचतुष्टयलक्षणानि च भगवति चक्रवर्ती ददर्शेति । तदन्तर्गत एव वसिष्ठनारद सवादात्मके पृथग्भूत श्रीवेङ्कटेशसहस्रनामाध्यायेऽपि, श्रीनिवासध्येयाकारवर्णने --

ऊर्ध्वौ हस्तौ यदीयो मुररिपुदलने बिभ्रतो शङ्खचक्रे
सेव्यावङ्घ्री स्वकीयावभिदवदधरो दक्षिणो यस्य पाणि ।
तावन्मात्र भवाब्धि गमयति भजतामूरुगो वामपाणि
श्रीवत्साङ्कश्च लक्ष्मीर्यदुरसि लसतस्त भजे वेङ्कटेशम् ॥

इत्यनेन यथोक्तभगवदसाधारणसर्वलक्षण विशिष्टवपुषैव श्रीनिवासो ध्येय इति च स्पष्टमुक्तम् ॥

यादृशरूपेण श्रीनिवास भगवान् चक्रवर्तिना दृष्ट तेनैव रूपेण तत्र भगवत सर्वदृश्यतया अवस्थानमपि चक्रवर्तिना प्रार्थित तथैवाङ्गीकृत च भगवतेति तत्रैव नवमाध्याये उक्तम् । यथोक्त तत्र ।

**राजपुत्रः—**

"यत्तद्रूप दुर्लभ योगिवर्यै-
रम्य भूयादीदृश सर्वदृश्यम् ।
अत्रैव त्व सर्वदा वासमीया
सर्वेषा वै मानवाना हिताय ॥

ओमित्युक्त्वाऽथापरं प्राह वाक्यं
मद्भक्तस्त्वं नास्ति तुल्यस्त्वयान्यः ॥" इति ॥

मार्कण्डेयपुराणे द्वितीयाध्याये सविमानश्रीनिवासाविर्भावप्रतिपादनघट्टे--

तन्मध्यस्थं दिव्यमूर्तिं वरेण्यं
शङ्खं चक्रं धारयन्तं कराभ्याम् ।
सेव्यत्वेन स्वं पदाम्भोजयुग्मं
सर्वेषां संदर्शयन्तं करेण ॥
स्वाङ्घ्रिद्वन्द्वं संश्रितानां जनानां
संसाराब्धिर्जानुदघ्नः किलेति ।
न्यस्तेनारौ वामतो दर्शयन्तं
सव्येनान्येनापि हस्तेन सम्यक् ॥
सर्वाभीष्टं दातुमुद्युक्तहेति
भक्तानां श्रीवासवक्षःस्थलं च ॥

मन्दस्मेरश्रीमुखं भूषणाढ्यं सर्वे श्रीमद्वेङ्कटेशं ह्यपश्यन् । इत्यनेन यथोक्तावयवसन्निवेशविशेषादिविशिष्टं श्रीनिवासं ब्रह्मादयः सर्वे ददृशुरित्यभिहितम् । तत्रैव चतुर्थाध्यायेऽपि कुमारं प्रति भगवदाविर्भावघट्टे --

शङ्खं चक्रं धारयन्तं कराभ्यां
फलप्रदश्चोरुगवामहस्तम् ।
प्राप्याविमावित्यपरेण पादौ
संदर्शयन्तं करपङ्कजेन ॥

इति तथाविधावयवसन्निवेशविशेषो भगवता स्कन्दाय दर्शित इति ।

भविष्योत्तरपुराणत्रयोदशाध्यायान्ते--

वरपद्मासने सुस्थां विधाय कमलालयाम् ।
पद्मावतीं विशालाक्षीं भगवानात्मवक्षसि ॥
अरिशङ्खविहीनोऽसौ कटिन्यस्तकरोत्तमः ।
दर्शयन् पाणिनैकेन दक्षिणेन वृषाकपिः ॥

पदपद्म सदाऽराध्य गति च परमा नृणाम् ।
कटिन्यस्तकरेणापि निजपदाब्जगामिनाम् ॥
नृणा भवपयोराशि कटिदघ्न प्रदर्शयन् ।
विराजते वेङ्कटेशः सम्प्रत्यपि रमापति ॥" इत्यनेन

सम्प्रति विद्यमान रूपमित्थभूतमिति च स्पष्टमुक्तम् ॥

चत्वारिंशाङ्कचिह्नित वामनपुराणे एकविंशाध्याये—यत्र स्वामिपुष्करिणी-दक्षिणतीरे योऽसौ सविमान श्रीनिवास आविर्भूतो ब्रह्मादिप्रत्यक्षगोचर आसीत् तत्रैव स भगवान् अदृश्यस्वीयाप्राकृतविमान स्वय च दृश्यमानस्सन् मनुजकारित विमानेस्थास्यतीति अगस्त्येन मुनीन्द्रान्प्रत्युक्तत्वात अगस्त्यादिभिरत्रैव भगवतो दृश्यमानतया अवस्थानप्रार्थनतया भगवता तथैव अत्रानवरतवासाङ्गीकारस्य तत्र तत्र पुराणेषु प्रतिपादनदर्शनाच्च श्रीनिवास एवायमिति स्पष्टमवगमेनेन नात्र स्कन्दस्यावासादिकल्पनेन श्रीनिवासापह्नव कर्तुं शक्य ॥

उक्त हि, यथोक्तवामनपुराणाध्याये—

अगस्त्यो भगवान भूप मुनीन्द्रानिदमब्रवीत् ।
यदेतद्दर्शित दिव्य विमान लोकपावनम् ॥
पूर्व भगवता तेन विष्णुना प्रभविष्णुना ।
तदत्रैव महाशैले सदा तिष्ठति पूजितम् ॥
अन्तर्हित न केनापि शक्यते द्रष्टुमञ्जसा ।
युगेयुगे तु य कश्चित्तपसा भावयेद्धरिम् ॥
स तस्य कृपया दिव्य विमान पश्यति ध्रुवम् ।
आगामिनि कलौ चापि सम्प्राप्ते पुण्यमुत्तमम् ॥
विमान सर्वपापघ्न विष्णुनाधिष्ठित सदा ।
पश्यता सर्वभूतानामाह्लादजनक शुभम् ॥
देवर्षिदैत्यगन्धर्वदेवसिद्धनिषेवितम् ।
मनुजैरेव तद्भक्तै कारित लक्षणान्वितम् ॥

भविष्यति महाश्चर्यं मुनीन्द्रा नात्र सशय ।
तत्रैव भगवान्विष्णु स्थास्यत्यक्षयशक्तिधृक् ॥
विमाने तु जगन्नाथ पूर्व दृष्टो हरि स्वयम् ।
शङ्खचक्रधर श्रीमान् चतुर्बाहुस्वरूपवान् ॥
अस्मिन् जगति विप्रेन्द्रा विश्रुत च भविष्यति ।
विमान तदघौघघ्न त्रैलोक्यतिलकोपमम् ॥ इति ।

अयमंश अनेकपुराणेपु तत्रतत्र विद्यमानो द्रष्टव्य । स्कन्दस्तु कुमारधारातीर्थ एव नियतवास तत्र निवसन्नेव आगत्यागत्य यथाकाल स्वामिपुष्करिणीतीरे विराजमान भगवन्त श्रीनिवासमाराधयन्नद्रावर्त्तति दर्शितवामनपुराण एव चतुर्विंशांकचिह्निते पञ्चमाध्याये पार्वती प्रति महादेवेन अभिधानप्रतिपादनान्नासौ स्वामिपुष्करिणीदक्षिणतीरे विराजमानो देव स्कन्द । अपि तु तदाराध्यभूता भगवान् श्रीनिवास देव एवेति स्फुटमेवावगम्यते ।

यथोक्त तस्मिन्नध्याये—

आस्ते वृषाचले देव श्रीभूमिसहितोऽनघे ।
अप्रत्यक्षालयोऽदृश्यो विहरन् गिरिमूर्धनि ॥
नानाद्रुमलताकीर्णे सर्वर्तुगणसयुते ।
स्वामिवापीसमीपे तु कोटिकन्दर्परूपवान् ॥
आस्ते लक्ष्म्या च धरया रमन् षोडशवार्षिक ।
दृष्ट्वा गुहोऽपि त देव चैत्रमासि शुभे तिथौ ॥
आराधयस्त्रिसन्ध्य वै देवगन्धर्वकिनरै ।
नृत्यैरप्सरसा चैव गीतवादित्रनि स्वनै ॥
रमयश्च रमानाथमुत्तरे गह्वरे गिरे ।
कुमारधारिकानाम तत्र निर्झरिणी शुभा ॥
मयूरवाहको देवि ! तस्यास्तीरे वसत्यहो ।
ब्रह्महत्या तु या तस्य दु सहा घोररूपिणी ॥

सा वृषाचलशृङ्गाग्रे दृष्टमात्रे बहि स्थिता ।
*कामयमानश्शेषाद्रौ नित्यमेवा हरेरसौ ॥
पुनरागमन देवि ' षण्मुखो नाभिवाञ्छति ॥ '' इति

इत्थमाराधकत्वेन वस्तुमिच्छतोऽस्य न अराध्यत्वेन अत्रावस्थान युज्यते। न च तस्य अत्र तथावस्थान क्वचित् एषु पुराणेषु प्रतिपाद्यते। प्रत्युत अप्राकृते अस्मिन् भगवत्क्रीडाचले प्राकृतानामाराध्यतयावस्थान निषिद्धतयैवावगम्यते यत अतोऽप्यधिकस्य एतत्पितुर्महादेवस्य अस्मिन् गिरावेव भगवता सह वस्तु वाञ्छत भगवतैवास्मिन् पर्वते वासमननुज्ञाप्य उपत्यकाया वासोऽभ्यनुज्ञात ,

यथोक्त वराहपुराणप्रथमभागे पञ्चाशाङ्कचिह्निते अष्टादशाध्याये —

इत्युक्त्वा कमलानाथ प्राहेशान शुचिस्मित ।
किमागमनकार्य ते वद शङ्कर सत्वरम् ॥
इति पृष्ट शिव प्राह स्वामिन्नित्यच्युते वच ।
स्वामिन् त्वया सदा यत्र स्थीयते वेङ्कटेश्वर ॥
तत्रैव देव स्थातव्य मया वृषगिरीश्वर ।
इति पृष्ट पुन प्राह नीलमेघसमद्युति ॥
आकल्प च वसामीह वङ्कटाहयभूधरे ।
त्वमप्यत्र मृडानीश ' महादेव ' वस प्रभो ' ॥
उपत्यकायामस्याद्रे शोचिष्केशदिगीश्वर ' । इति ।

इत्थ महादेवस्यापि अस्मिन वेङ्कटाचले लोकानामाराध्यतया अवस्थानस्य प्रतिषेधसिद्धौ स्कन्दस्य तथावस्थानामसभव किंपुनर्न्यायसिद्ध एव । तथा च स्वामिपुष्करिणीदक्षिणतीरे श्रीनिवासदेवो यथा देवादीना प्रत्यक्षविषय आविर्भूत तथैव तत्रागस्त्यादिप्रार्थितो नित्य वर्तते। स एव चार्चारूपेण अद्याप्यत्र सर्वदृश्यो विराजत इति नात्र स्कन्दस्यावकाश ॥

एव ब्रह्मपुराणतृतीयाध्याये भगवता श्रीनिवासेन चोदित शङ्खराजो यथा

---

कामयानश्शेषाद्रौ इति सम्यगिवभाति

दृष्टं श्रीनिवासविमानार्चाविग्रहादिकं स्थापयामासेत्यपि प्रतिपाद्यते। यथोक्तं तत्र—

यथादृष्टं विमानं ते मद्रूपं पुरुषर्षभ ।
तथा कुरु महाभाग! तेन ते भविता गतिः ॥
इत्युक्त्वान्तर्दधे देवः सर्वेषामेव पश्यताम् ॥
तेनोक्तमार्गेण विधाय पुण्यं
विमानवर्यं प्रतिमां च पुण्याम् ।
प्रख्याप्य शङ्खो नरलोकसंघे
जगाम विष्णोः पदमव्ययं शुभम् ॥ इति ।

अस्य श्रीनिवासदेवस्य शङ्खचक्रवरमुद्राकटिविन्यासचतुर्विधचिह्नधारिचतुर्भुजत्वं श्रीदेवश्रीवत्साङ्कितवक्षस्कत्वं च तत्र तत्र प्रतिपाद्यमानं दुरपह्नवं देवतान्तरव्यावर्तकं चिह्नम् ।

अत एव हि परमैकान्त्यग्रेसरैः श्रीपराङ्कुशपरकालादिदिव्यसूरिभिः इतः सुबहोः कालात्प्राचीनेषु द्राविडवेदतदङ्गोपाङ्गरूपेषु दिव्यप्रबन्धेषु अयं देवो विष्णुरिति इदं क्षेत्रं वैष्णवक्षेत्रमिति च अनुसन्धाय एतस्य स्तवनादिरूपमुपासनं क्रियमाणं दृश्यते ।

नचैते विरक्ताग्रेसराः अस्य देवस्य वस्तुतो देवतान्तरत्वेऽपि कथंचित्तत्र विष्णुत्वमारोप्यापि वा कृत्रिमामुपासनभावनां कुर्युः ।

न चामुष्मिकपारमार्थिकप्रवृत्तियुक्तानां सकलबाह्यविषयव्यापारविमुखानां मर्मीषामीदृशार्थे प्रतिष्ठादिकामनामूला प्रवृत्तिः कथंचिदपि सङ्गच्छते ।

न च तेषां स्तवनोपासनादिकं वराहभगवन्मात्रविषयं व्यवस्थापयितुं शक्यम् । दीर्घतरमहाकिरीटधारित्वं शङ्खचक्रधरत्वश्रीदेव्यधिष्ठितवक्षस्कत्वावयव-सन्निवेशविशेषादीनां श्रीनिवासासाधारणचिह्नविशेषाणां वराहभगवद्व्यावृत्तानां अनुसन्धानदर्शनात् ।

श्रीपराङ्कुशदिव्यसूरिणा द्राविडब्रह्मसंहितायां श्रीवेङ्कटाचलविषययोस्तृतीयशतकषष्ठशतकदशमदशकयोर्मध्ये चरमनिर्दिष्टे दशके श्रीनिवासभगवदसाधारणचिह्नजातमपि सम्यगभिहितम् ॥

तत्र द्वितीयगाथायां दक्षिणपाणौ प्रज्वलत्सुदर्शनधरत्वं तदुपलक्षित-मन्यदायुधजातं च, दशमगाथायां पद्मालया नित्याधिष्ठितवक्षस्कत्वं, निगम-गाथायां प्राप्यप्रापकत्वेन निजचरणकमलयुगलं प्रदर्शयितृदक्षिणपाणिमुद्रां निजचरणकमलाश्रितानां संसाराब्धेर्जानुदघ्नत्वं प्रदर्शनमुखेन समुज्जीवनसंदर्शयितृवामोरुसलग्नवामहस्तमुद्रां च भगवतः श्रीनिवासदेवस्य प्राकाशयत् भगवान् पराङ्कुशदिव्यसूरिः ॥

यथोक्तं तत्र द्वितीयगाथायां कुपितप्रज्वलच्छ्रीमन्नेमिदक्षिणपार्श्वेति दशमगाथायां वियोक्तुमसमर्थास्मि क्षणमपीत्यनुसन्धाय पद्मोर्ध्वकुमारी नित्याधिष्ठितवक्षस्थलेति । निगमगाथायां चरणावस्तादनुरूपं निविश्य हे दासा वर्धध्व-मित्येव कृपां दिशन्तमनुपमप्रकारं स्वामिनमिति च । अत्र निगमगाथायां चरणाधोनिवेशस्य तत्सम्मुज्जीवनस्यच प्रदर्शनात् । ततो भगवतः सकले-तरव्यावृत्तानुपमप्रकारत्वस्य चाभिधानाद्दक्षिण वामपाणिगतं मुद्राद्वयमाभिहितं द्रष्टव्यम् ॥

एवमन्यान्यपि लक्षणानि तत्तद्दिव्यसूरिभिरनुसंहितानि द्रष्टव्यानि । अत्र भगवतो वामहस्तस्य कटितटोरुसन्धिन्यस्तस्य मुद्रायां क्वचित् भवजल धेर्जानुदघ्नताप्रदर्शनपरत्ववर्णनं दृश्यतोऽपि दिक्प्रदर्शनविधया तथासूचनं संभव तीत्यभिप्रायकं बोद्धव्यम् ।

तस्माच्छ्रीनिवासविषय स्तवनोपासनादिकं दिव्यसूरिकृतमप्यत्र प्रबलतरं प्रमाणमेव ।

अस्य श्रीनिवासभगवतः शङ्खचक्राद्यायुधविहीनपाणिकत्वं तु तोण्डमाने चक्रवर्तिने दुर्विषहवैरिनिषूदनकाङ्क्षिणे निजायुधदानसूचकं भगवतैव संकल्पि-तमिति पुराणवचनेष्वेव स्पष्टम् । ब्राह्मपुराणे सप्तमाध्याये —

दर्शयन् भक्तवात्सल्यं यो ददौ हस्तगे शुभे ।
शङ्खचक्रे नृपेन्द्राय चक्रवर्तीति यं विदुः ॥
अत एवारिशङ्खाभ्यां द्वयेन रहितौ करौ ।
अर्चारूपशिलारूपविग्रहस्य महात्मनः ॥ इति । शाङ्खचक्रा-

हित्यकारणकथन प्रस्तुत्य ततोऽध्यायान्ते—

स्थिते कदाचित् क्षितिपे श्रीनिवासस्य सन्निधौ ।
शत्रवश्च बलोद्रिक्तारुरुधुस्तस्यैव पुरीम् ॥
श्रुत्वा बलार्णव घोरमायान्त नातिशङ्कित ।
योद्धुकामो जगामाथ पुनस्तैश्चपराजित ॥
तत खिन्नमना भूत्वा तमेव शरण ययौ ।
बिलद्वारेण देवेश गत्वा पादौप्रगृह्यच ॥
रुरोद त्राहि त्राहीति तप्राहार्चास्वरूपवान् ।
माभैषी पुत्र भद्रते चक्रशङ्खौददामिते ॥
ताभ्यागच्छ पुरीस्वीया तौ तेशत्रून् हनिष्यत ।
इत्युक्त्वा तौददौ तस्मै ताभ्या सह जगामस ॥
तौच शत्रून्निहत्याशु कृत्वा राज्यमकण्टकम् ।
आजग्मतु क्षितिभृता साक देवस्यसन्निधौ ॥
राजा देव ववन्देऽथ स्तुत्वा स्तोत्रैरनेकश ।
वर वरय भद्रेति देवो राजानमब्रवीत ॥

**राजा**

ममायुध प्रदानस्य ख्यात्यैदेवोत्तमप्रभो ।
अर्चाबिम्बे शिलाबिम्बे चक्रशङ्खौ नधारय ॥
इति सप्रार्थितोदेवो नदधार पुनश्चतौ ।
अदृश्यौ तिष्ठतश्चोभौ पार्श्वेन शार्ङ्ग धन्वन ॥

इत्यन्तेन शङ्खचक्राहित्ये कारण सविस्तर निरूपितम् ॥

अत्र भक्तविषये प्रदर्शित निज महोदार्य स्मारकतया दिव्यायुध धारण सर्वलोक दृग्गोचरतया नकर्तव्यमित्येतावन्मात्रस्यैव चक्रवर्तिप्रार्थित-तया तथाधारणाभावेऽपि सर्वदास्वासाधारण नित्यसिद्ध दिव्यायुधसन्निधान-मस्त्यैवेतिदर्शितम् ॥

एवं ब्रह्माण्डपुराणे एकादशाध्यायेऽपि—

**श्रीभगवान्**

> शङ्खचक्रे प्रदास्यामि भावि सायुज्य सूचके ।
> तथाकौमोदकीं शार्ङ्ग नन्दकच महामते ॥
> पञ्चायुधधरो भूत्वा दुरात्मान सुरद्रुहम् ।
> सबन्धुवर्गं सामात्य जहि सग्राममण्डले ॥
> इत्युक्त्वा प्रददौ तस्मै शुचये चक्रवर्तिने ।
> शङ्खचक्र गदाशार्ङ्ग खड्गानिमधुसूदन ॥

इति सिह्मादाख्यासुरवधार्थं चक्रवर्तिने भगवता पञ्चायुधदान प्रतिपाद्य, ततोऽध्यायान्ते ।

> ततस्सिह्मादसहारी चक्रवर्ती महीपति ।
> व्यजिज्ञपत्स्ववृत्तान्त वेकटेशाय सर्वत ॥
> शङ्खचक्र गदाशार्ङ्ग नन्दकान् नृपनन्दन ।
> अर्पयामास हरये वेंकटाद्रिनिवासिने ॥
> राजान च तथा पञ्चायुधान्यपिचमाधव ।
> उवाचमेघनिर्घोष गम्भीरिम सूना गिरा ॥
> राजन् यदेच्छसि जय मजय्ये साम्परायके ।
> तदेमान्यायुधान्युच्चै स्साहाय्य कुर्वता तव ॥

इत्यादिना सिह्माद वधानन्तर चक्रवर्तिना प्रत्यर्प्यमाणाना दिव्यायुधाना तत्तत्काल साहाय्यार्थं चक्रवर्ति सन्निधान एवावस्थान नियम्य स्वस्य किंचित्काल पर्यन्त प्रत्यक्ष विगतायुधत्व दिव्यायुधाना माननमात्र सनिधान चाभ्युपगम्य तत किंचित्कालानन्तरं कलौ विमानादीनामिव दिव्यायुधानामपि भक्तकल्पितानामङ्गीकार लोकतुष्ट्यै कुर्वन् वर्तिष्ये इति चक्रवर्तिन प्रति भगवतैवाभिधानप्रतिपादनात भगवतोऽस्य श्रीनिवासदेवस्य स्वासाधारण दिव्यायुधराहित्यमद्योपपद्यते ।

नचेत्थ स्कन्दस्य स्वासाधारणायुध प्रहाण कारण एवंभूतस्य तस्य अर्चारूपेण स्थापन वा पुराणे क्वचित्प्रतिपादितम् ।

तस्मान्नासो स्कन्द शङ्कागन्धार्हो देव ।

यदपिवादिनो मन्यन्ते अस्य देवस्य श्रीवैष्णवैराराध्यमानतादशाया-मपि प्राचीन सम्प्रदायानुसारेण देवतान्तरासाधारणै बिल्वपत्रैरर्चन क्वचिन्मासे क्रियमाणमद्याप्यनुवर्तमानदृश्यते, तदिद तस्य देवतान्तरत्वसाधक लिङ्ग-मिति । अस्यदेवस्य विष्णुरूपत्वे तदसाधारण दिव्यायुध राहित्य देवतान्त-रासाधारण जटिलत्व नागाभरणधारित्व च दृश्यमान न कथचिदप्युपपद्यत इतिच । तदप्येतेन निरस्तम् । प्रत्यक्ष दिव्यायुधराहित्यकारणस्य यथोक्त-रीत्या पुराण एव सम्यक्प्रतिपादितत्वात । परश्शतेषु स्थानेष्वस्य श्रीवैकुण्ठ-नाथ श्रीमहाविष्णोरेव श्रीनिवासाख्यावतार विशेषरूपताया साक्षादभिधीयमा-नाया लिङ्गेन श्रुतिबाधनायागाच्च ।

अस्य देवस्य प्रागुदाहृत प्रमाणगणगता विष्णुत्व श्रुतिरन्यथासिद्धि गन्धानर्हा विद्यत इति प्राक्तन निरूपणेनैव विशदम् ॥

लिङ्ग चेदमन्यथासिद्धम । बिल्वपत्रार्चनादीना देवतान्तरासाधारण-त्वस्य अप्रामाणिकत्वात् । तुलसीदेव्यभिमततमत्वेन तुलसीदलाना भगवद-भिमतत्ववद्बिल्ववृक्षस्य श्रीदेव्याभिमततया बिल्वपत्राण्यपिहि भगवदभि-मतानि अर्चनोपकरणानि शास्त्रसिद्धानि । बिल्ववृक्षस्य श्रीदेव्यभिमत वृक्षत्व च—

"आदित्यवर्णे तपसोऽधिजातो वनस्पतिस्तव वृक्षोथ बिल्व" इति श्रीसूक्त श्रुति सिद्धम् । ततोबिल्वपत्रैरपि भगवदर्चन तत्र तत्र शास्त्रै-र्विधीयते । यथोक्त हारीतस्मृतो विशिष्टपरम धर्मशास्त्रे पञ्चमाध्याये धनुर्मा-सार्चन घट्टे—

कोदण्डस्थे दिनकरे तस्मिन् मासि निरन्तरम् ।
अरुणोदय वेलाया प्रात स्नान समाचरेत ॥

तर्पयित्वा विधानेन कृतकृत्य समाहित ।
नारायण जगन्नाथ मर्चयेद्विधिवद्विज ॥
पौरुषेण विधानेन मूलमन्त्रेण वा यजेत् ।
शतपत्रैश्च जातीभि तुलसीबिल्वपुष्करै ॥
गन्धैर्धूपैश्च दीपैश्च नैवेद्यैर्विविधैरपि ।
पायसान्न शर्करान्न मुद्गान्न सघृत हवि ॥
सुवासितच दध्यन्न मपूपान्मधु मिश्रितान् ।
मोदकान् पृथुकान् लाजान् शष्कुली चणकानपि ॥
विविधानिच भक्ष्याणि फलानिच निवेदयेत ॥ इति ।

एव तस्मिन्नेवाध्याये तत पूर्वत्र --

लक्ष्मीनारायण देव भार्गवे वासरे निशि ।
अखण्ड बिल्व पत्रैश्चकोमलैस्तुलसीदलै ।
अर्चयेन्मन्त्ररत्नेन वामाङ्कस्थश्रियामह ॥ इति ।
अखण्ड बिल्वपत्रैर्वा पद्मपत्रैर्घृतेन वा ।
श्रीसूक्तपुरुष सूक्ताभ्या प्रत्यृच जुहुयात्तत ॥ इति ।
गोपालवपुष कृष्ण मर्चयेच्छ्रद्धयान्वित । इत्यारभ्य—
करवीरै कोविदारैर्बिल्वैरास्फोटकैरपि ।
दशाक्षरेणमन्त्रेण पूजयेत्पुरुषोत्तमम ॥ इति ।
नृसिह वपुष देव पूजयेत्तद्विधानत ।
मन्त्रराजेन गायत्र्या मूलमन्त्रेणवा यजेत् ॥
अखण्ड बिल्वपत्रैश्च जातिकुन्दैश्च योधिकै ॥

इति चोक्तम् । एव श्रीवेङ्कटाचल माहात्म्यपर श्रीवाराहपुराण प्रथम-भागेऽपि पञ्चचत्वारिंशाङ्कचिह्निते त्रयोदशाध्याये दशरथस्य श्रीनिवासाविर्भाव-मुद्दिश्य स्वामिपुष्करिणी तीरे तप कुर्वता महर्षीणा चरित्रदर्शनसमये—

अर्चयन्ति जगन्नाथं तथाबिल्वदलैरपि ।
तुलस्यास्सुदलैश्चापि कृष्णै श्वेतैश्च योगिन ॥ इत्युक्तम् ॥

श्रीवेंकटाचल माहात्म्यपर वाराहपुराण द्वितीयभागेऽपि नवमाध्याये देवकृतलक्ष्मीस्तोत्रे—

नमोबिल्व वनस्थायै विष्णुपत्न्यै नमोनम ।" इत्यनेन स्तोत्रप्रीत श्रीमहालक्ष्मीप्रतिवचनेऽपि ।

अखण्डैर्बिल्वपत्रैर्मा मर्चयन्ति नराभुवि ।
स्तोत्रेणानेन येदेवा नरा युष्मत्कृतेनच ॥
धर्मार्थकाममोक्षाणा माकरास्ते भवन्तिवै ॥

इत्यनेन च वचनेन श्रीदेव्याबिल्वप्रियत्वस्य तथैव साक्षात बिल्वपत्रै स्वार्चनविधानस्यच प्रतिपादनात् ।

भगवत श्रीनिवासस्य श्रीदेव्या नित्याधिष्ठितवक्षसो बिल्वपत्रैरर्चन हि सुसगतम् । एवमन्यदपि बिल्वपत्रैर्भगवदर्चनप्रतिपादनपर बहुलतर तत्र तत्र स्थित वचनजात अत्रोपष्टम्भक द्रष्टव्यम् ।

इत्थ श्रीदेव्या भगवतो विष्णोश्च बिल्वप्रियत्वस्य बिल्वदलैरर्चनविधानस्यच प्रमाणसिद्धत्वेन तदनुरोधेनैव इह तथार्चनानुष्ठान सम्प्रदायागमात् ।

अन्यत्रापि विष्णुस्थलेषु क्वचित्क्वचित् बिल्वपत्रार्चनस्य अधुनापि दृश्यमानत्वाच्च नानेनायदेवो देवतान्तरीकर्तु शक्य ।

अथ नापि जटिलत्व देवतान्तरासाधारणम् । विष्णोरप्यवतारेषु क्वचित्क्वचित् तत्सद्भावस्य प्रमाणप्रतिपन्नत्वादिहापि तत्सभवे बाधकाभावात् । यथोक्त श्रीभागवते एकादशस्कन्धे भगवद्धर्म निरूपणपरे निमिनवयोगीश्वर सवादे पञ्चमाध्याये करभाजन योगीश्वर वचने—

**राजा**—

कस्मिन् काले स भगवान् किंवर्ण कीदृशो नृभि ।
नाम्नावाकेन विधिना पूज्यते तदिहोच्यताम् ॥

**करभाजनः**—

> कृत त्रेताद्वापरच कलिरित्येषु केशव ।
> नानावर्णाभिधाकारो नानैव विधिनेज्यते ॥
> कृते शुक्लश्चतुर्बाहु जटिलो वल्कलाम्बर ।
> कृष्णाजिनापवीताक्षान् बिभ्रद्दण्डकमण्डलू ॥
> मनुष्यास्तु तदाशान्ता निर्वैरास्समदर्शिन ।
> यजन्ति तपसा देव शमेनच दमेनच ।
> हस सुपर्णो वैकुण्ठो धर्मो योगीश्वरोऽमल ।
> ईश्वर पुरुषोऽव्यक्त परमात्मेति गीयते ॥ इत्यादि ॥

अत्र तत्तत्कालेष्विच्छानुरोधेन भगवतो नानाविधवर्णायुधाकार नाम-विशिष्ट रूपधारित्व । तत्तदवतारेषु तत्तद्वर्णायुधाकारादि विशिष्टवेषेणैव समाराध्यत्वचाभिधाय कालविशेष जटिलत्वाद्याकारविशिष्टरूपशालिनो भगवदवतारविशेषस्य तादृूप्येण समाराध्यत्वाभिधानादिहापि श्रीनिवासाख्यभगवदवतारविशेषे दृश्यमान जटिलत्वचतुर्बाहुत्वाद्याकारविशिष्ट दिव्यरूपशालिनो भगवतस्तथैव समाराधनीयत्व युक्त सभवति ।

एव पाञ्चरात्रे सात्वत सहितायां द्वादशे विभवदेवताध्यानपरिच्छेदे पातालप्रभृति सर्वलोकस्थित सकलविभवदेवताध्येयाकार प्रतिपादनपरे प्रथम पाताल निलयस्य सङ्कर्षणमूर्तेभगवतोऽनन्तस्य नानाविधाकारशालिनो-विद्याधिदेवाकारवर्णने—

> विद्याधिदेव भगवश्चतुर्वक्त्र चतुर्भुजम् ।
> लम्बकूर्चजटादण्ड कमण्डल्वक्षसूत्रकम् ॥
> फुल्लरक्ताम्बुजाभास श्वेतपद्मकराङ्कितम् ।
> श्रुतीर्ऋगाद्यावक्त्रेभ्य प्रोद्गिरतमनुस्मरेत् ॥ इति ।

तत्रैव किञ्चिद्दूरत उपरिष्टान्नरनारायण हरिकृष्णरूप चतुर्विध-भगवदवतारेषु कृष्णाख्यावतारस्वरूप वर्णन च ।

कृष्ण मिन्दीवरश्याम मूर्ध्वबाहुं जटाधरम् ।
पादेनैकेन तिष्ठन्त माहरन्तच मारुतम् ॥
एक त्रि षड्द्विषड्रात्राद्यतिकृच्छ्र परायणम् ।
पक्षमासोपवासाश्च दिशन्तमनुचिन्तयेत् ॥ इति ॥

तत्रैव पुन धरातलस्थितावतारान्नरध्येयाकार निरूपणे—

ध्यायेद्द्राश्वग तवै तनुत्रावृत विग्रहम् ।
सितोष्णीषललाटच नातिदीर्घ जटाधरम् ॥
द्रवत्कनकवर्णाभ मिपुधिद्वयमध्यगम् ।
शरचाप करव्यग्र खड्गकुन्तकुठारिणम् ॥
यज्ञाध्ययन दानादि परिरक्षन्तमेवहि ।
शातयन्त मवर्णाना मधर्म निरतात्मनाम् ।
सर्वतत्त्वाश्रय तत्त्व सर्वशक्तिमयविभुम् ॥
सर्वेन्द्रियगुणाभास सर्वेन्द्रिय विवर्जितम् ।
निश्शेष भुवनानाच ध्यातव्यच धरास्थितम् ॥
अनन्तशयनाभूष कल्पान्तहुतभुक्प्रभम् ।
ज्वलज्ज्वालावलीयुक्त ज्वलनाशुकवेष्टितम् ॥
चक्राद्यायुधबृन्देन मूर्तेन परिवारितम् ॥ इति चोक्तम् ॥

इत्थमनेकेपु भगवदवतारेपु, जटाधरत्वसद्भावावगमेन अस्यापि श्रीनिवासभगवत तत्सद्भावो न विरुद्ध इति नैतेनासौ देवतान्तरीभवितुमर्हति ।

किचात्र उदाहृत सात्वत सहितावचन सिद्ध चरमरूपस्वरूप स्वभावपर्यालोचने तद्रूपस्य श्रीनिवास भगवद्रूपस्य न अत्यन्त सादृश्यावगमेन तदेवेदमिति प्रत्यभिज्ञाकरमप्यस्मिन भगवत श्रीनिवासस्य पुराणप्रतिपन्न दिव्यरूपम् । अत्र ध्यायेद्द्राश्वगमित्याद्युक्त अश्वगामित्वादिलक्षण श्रीनिवासस्यापि दृश्यते । यथोक्त श्रीवराहपुराणद्वितीयभागे चतुर्थाध्याये पद्मावतीविवाहोपोद्घात मृगयाविहारघट्टे—

एतस्मिन्नन्तरे चाशु ददृशुर्हयमुत्तमम् ।
अकलङ्केन्दु धवल जाम्बूनद परिष्कृतम् ॥
स्फुरद्विद्युल्लतायुक्त शरन्मेघमिवोन्नतम् ।
तस्मिस्तु पुरुषकृष्ण मदनाकार वर्चसम् ॥
पुण्डरीक दलाकार कर्णान्तायतलोचनम् ।
सुसूक्ष्मक्षौमसवीत नीलचूलिकयोज्वलम् ॥
पद्मराग मणिद्याति स्फुरत्कुण्डल मण्डितम् ।
सुवर्णरत्ननिचिन शार्ङ्गदिव्यधनुर्धरम् ॥
अपरेणकरेणैव वहन्त काचन शरम् ॥ इति ॥

अत्र ददृशुर्हयमित्यादिना अश्वगामित्व ध्यायेद्वराश्वगमित्यत्रोक्तमभिहितम् । ' मितोष्णीष ललाटच नातिदीर्घ जटाधर " मित्युक्त उष्णीषजटाधरत्व अत्र " सुसूक्ष्म क्षौमसवीत नीलचूलिकयोज्वल " मित्यनेनाभिहितम् । शरचापकरन्यग्रमित्युक्त शरधनुर्धरत्व अत्र सुवर्णरत्ननिचिन शार्ङ्गदिव्य धनुर्धरम् । " अपरेण करेणैव वहन्त काञ्चनशरम " इत्यनेनाभिहितम ।

अतोऽत्र रूपद्वयानुरूप्यमवगम्यत इति बोध्यम् ॥

भविष्योत्तरपुराणेऽप्युक्तं षष्ठा याये—यथोक्तमृगयाविहार घट्ट-एव ।

सकदाचिद्रमेशस्तु चिन्तयामास वै हयम् ।
मनसाचिन्त्यमानतु हय प्रत्यक्षता गत ॥
वायुरश्वत्वमापन्नो रज्जुनत्त्वाभिमानिनी ।
उपासर्पत्स्वय लक्ष्मीस्ततोऽश्व त मपूजयन् ॥
तस्योपरि समातिष्ठत् सर्वाभरण भूषित ॥ इनि ॥
कबरीकृत केशेषु रक्तवस्त्र सुवेष्टयच ।
लम्बितै पुष्पजालैश्च स्कन्धगै परिभूषित ।
शुवर्णरत्न सबद्ध पादुका गूहिनाङ्घ्रिक ।

धनुर्बाणधर श्रीमान् साक्षान्मन्मथ मन्मथ ।
एव मनोहर रूप धृत्वा श्रीवेंकटेश्वर ।
हय रत्नसमाकीर्णे रूपबर्हे विभूषितम ।
सुवर्णतिलकोल्लासिवक्त्र वायुमनोजवम् ।
नीलवर्ण पाण्डुपाद हस्तपञ्चदशान्तम ।
आरुह्य देवमण्यादि सर्वलक्षण सयुतम् ।
अवरुह्यगिरिश्रेष्ठा न्मृगयार्थ जगामस ।। इति च ।

अत्रापि श्रीनिवासस्य हयगामित्व "सकदाचिद्रमेशस्तु चिन्तयामास-वैहयम्" इत्यादिना हयरत्नसमाकीर्णमित्यादिनाचाभिहितम् । "कबरी-कृतकेशेषु रक्तवस्त्र सुवेष्टयच" इत्यनेन उष्णीषजटाधरत्व । धनुर्बाणधर श्रीमान् इत्यनेन शरचापकरस्यग्रत्व चाभिहितम् ।। प्रागुदाहृत वराहपुराण षट्के अस्मिन् षट्केच उभयत्र मृगयार्थेपानुगुण धनुश्शरधरत्वाभिधानात्तदपे-क्षित कवचतूणीर धरत्वमपि विवक्षितमेवेति प्रागुदाहृत सात्वतसंहितावच-नेषु दृष्ट तनुत्रावृतविग्रहत्वमिषुधिद्वयमध्यगत्वचाभिहितप्रायमेव ।

अत दर्शितरूपद्वय साम्य स्फुटतरमेवेति बोध्यम् । यद्यपि दर्शित-वराहपुराणषट्के 'अकलङ्केन्दुधवल'मिति हयस्य शुद्धधवलवर्णकायत्व 'सुसूक्ष्म क्षौमसवीत नीलचूलिकयाज्वल'मिति भगवत सितोष्णीष सवृत जटाधरत्व चाभिहितम् ।

अत्रतु 'नीलवर्ण पाण्डुपाद'मिति हयस्य पाण्डुपादनीलवर्णकायत्व 'कबरीकृत केशेषु रक्तवस्त्र सुवेष्टयच, इति भगवत रक्तोष्णीष सहृतजटा-धरत्व चाभिधीयत इति भेदोऽवगम्यत । तथापि प्रतिकल्पानुवर्तिचरित्र-विशेषेषु कल्पभेदेन विद्यमान एव प्रधानांशतोल्पे अवान्तर विषयगत मीदृश मीषद्वैचित्र्य सभवत्येवेति तन्निबन्धन एवायमीषद्भेदव्यपदेश इति नैतावता प्रधानविषयवैषम्यमनुसन्धातु युक्तम् ।

किच पौरुषेयेषु स्मृतीतिहासपुराणादिषु शास्त्रेषु तत्तच्छ्रोतृप्रवक्तृ-परपरा सवादमूलेषु प्रणेतृणा श्रवणानवधान मूलविषम प्रणयनाद्वा सावधान

श्रवणानामेव सता तेषामासतमत्वेन यथा श्रवणमेव प्रणयनेऽऽपि पुराणगत तत्तत्सवादाकर प्रवक्तृ श्रोतृपरपरा प्रवचन श्रवणानवधान विषमप्रवृत्ताना तत्तत्सवादाना यथा श्रुतमेव प्रणयनाद्वा, एकस्मिन्नेवकल्पेऽपि दर्शितावान्तर विषयवैचित्र्यसभवोऽवर्जनीय ॥ उक्तहेतुन एवच स्मृतीतिहास पुराणादि पौरुषेयशास्त्रेषु सर्वत्र । अत्रैव श्रीवेङ्कटाचलमाहात्म्यपरेषु पुराण भागेषुच तत्तच्चरित्रेष्ववान्तरविषयवैचित्र्याणि बहूनि दृश्यन्त । तत्र सर्वत्र अनयैवदिशा-निर्वाहोऽनुसन्धेय ।

एव स्कान्द पुराणान्तर्गतप्रथमभागे दशमाध्यायस्थभगवदाविर्भावघट्टे ।

दध्युर्नारायणदिव्य परमानन्दविग्रहम ।
वाङ्मानस पथातीत विश्वैश्वर्यभासुरम ॥

सहस्रनेत्र साहस्र बाहुपादैस्समन्वितम ।
तप्त कार्तस्वर निभस्फुरत्कान्ति मनोहरम् ॥

दष्ट्राकराल दुर्दर्श वमन्त दहनच्छटा ।
कौस्तुभेन विराजन्त दधानमुरसि श्रियम् ॥

अविचिन्त्यमनाद्यन्त मत्यन्त भयदायकम ।
प्रकाशयन्त ब्रह्माण्ड सर्वमात्मनिसर्वगम ॥

अगस्त्यशङ्खप्रमुखा स्त सर्वे हृष्टचेतस ।
तमालोक्य जगन्नाथ भूया भया ववन्दिरे ॥

भ्रमन्ति लोकरक्षार्थ मायुधानि तदाहरे ।
निजतेजो बलापेनान्याजग्मुस्त निषेवितुम ॥

चक्रमर्क प्रभ दिव्या गदा खड्गश्चनन्दक ।
पुण्डरीक चोग्ररव पाञ्चजन्यश्शशिप्रभ ॥

तदा ब्रह्माण्डमखिल पूरयामास निर्भर ।
पाञ्चजन्यस्य निनद सर्वासुरभयकर ॥ इत्युक्तम् ।"

अत्र 'वमन्त दहनच्छटा, इत्यनेन प्रागुदाहृत सात्वतसहिताव-

चनेषु 'कल्पान्त हुतभुक्प्रभम् । ज्वलज्ज्वाला वलीयुक्त ज्वलनांशुकवेष्टि-त'मित्युक्त ज्वालामालाकुलत्वमभिहितम् । 'तप्तकार्तस्वर निभस्फुरत्कान्ति-मनोहरमि'त्यनेन द्रवत्कनकवर्णाभमिति सात्त्वतवचनोक्तांशोऽभिहित । 'भ्रमन्तिलोकरक्षार्थ मित्यादिना मूर्तिमद्दिव्यायुधागमन प्रतिपादकेन, चक्राद्यायुधबृन्देन मूर्तेन परिवारितमिति सात्वतवचनोक्तांशोऽभिहित ।

* तस्मादिहापि दर्शितसात्वतसहितोक्त दिव्यरूपस्य श्रीनिवास रूपस्य च सारूप्यमेवावगम्यत इति ध्येयम ।

यद्यपि वराहपुराणद्वितीयभागस्थ प्रागुदाहृत मृगयाविहारघट्टे 'तस्मिंस्तु पुरुष कृष्णं मदनाकार वर्चसम् , इति नीलवर्णत्वमभिधीयते, इहतु रुक्मवर्णत्वमभिधीयत इति भेदोऽवगम्यते । तथापि भगवतो दिव्यरूपस्य कनककान्ति प्रत्युप्त विजातीय नील प्रभा मनोहर मयूरग्रीवया विद्युत्प्रभाप्रत्युप्त नीलमेघेनच समानाकार भासुरतया कृष्णपिङ्गलाकारत्वेन श्रुतिप्रतिपन्नतयाच कृष्णाभत्वेन रुक्माभत्वेन च निर्देष्टु योग्यतयाविरोध इति बोध्यम् ।

अत एवच दर्शितस्कान्द पुराण भगवदाविर्भावघट्ट एव भगवतो विरिञ्च्यादि प्रार्थनया ज्वालामालाकुल भीषणाकार परित्यज्य सौम्याकार प्रदर्शन समये 'विमाने रत्नखचिते बभूव सुखदर्शन । चन्द्रबिम्बाननश्शान्तो नीलोत्पलदलद्युति , इति नीलवर्णत्वमपि भगवतोऽभिहितम् ।

एव वामनपुराणभागेऽपि चतुस्त्रिंशाङ्कचिह्निते पञ्चदशाध्याये श्रीनिवासाविर्भावघट्टे,

> कीदृश वै हरेस्तस्य रूपमव्यक्तरूपिण ।
> कियन्तो वा भुजास्तस्य कियन्ति वदनानिच ॥
> कियन्तोवा धृतास्तेन तीक्ष्णा प्रहरणास्तथा ।
> ब्रूहि तद्रूपसस्थान विश्वमूर्तेर्हरेर्मुने' ॥

---

* अय च वेंकटाद्रिनिवासः श्रीमान् वेंकटनायक प्रादुर्भावप्रभृति वैखानसागमविधिना आराध्यते इति सुस्पष्टम् । तर्हि कथं सात्वतसंहिताप्रतिपाद्यांश सारूप्यम् ?

इत्यादिना तत्राविर्भूत हरेर्दिव्यरूप कीदृशमिति प्रश्नमुपक्षिप्य तत्समाधान-प्रकरणे ।

' मूर्धजै कुञ्चितैश्चापि नीलैर्मृदुतरैस्तथा ।
लम्बमानैर्विनिष्क्रान्तै किरीटाच्छुभदर्शनात् ॥

प्रच्छाद्यमान वदन मेघैरिव निशाकरम, । इत्यनेन भगवतो जटाधरत्वम् , ' करैपुनपुर्संयुक्तास्तीक्ष्ण प्रहरणास्तथा ।

ज्वलन्तश्च स्फुरन्तश्च मिथिलेश चकाशिरे । इत्यनेन

' अनेकशत साहस्रा कालाग्निसदृशप्रभा ।
नानाप्रहरणा घोरास्सयुक्ता स्तत्र बाहुषु ॥

भयदास्सुरशत्रूणा दैत्येन्द्राणा महौजसाम् ।
सर्वगा स्सर्वदेशेषु भक्तानामभयप्रदा ॥

जाज्वल्यमानास्तेजोभि रूक्षकैस्सौम्यकैरपि ।
अकुर्वन्निष्प्रभौ सद्यश्चन्द्रसूर्यौ स्वरश्मिभि ' ॥

इत्यनेनच रूक्षसौम्यद्विविधाकार धारि भगवद्विविधाकारानुगुणै रूक्षसौम्य तेजश्शालिभि द्विविधाकारैर्नाना विधैरायुधै भपितकरबाहुल्याभिधानादस्य श्रीनिवास भगवत स्थितिकर्तृत्वानुगुणसौम्याकार योग्य दिव्यायुध धारित्व वत् सहारकर्तृत्वानुगुण भीषणाकार योग्य शक्तिकुठारादि घोराकारायुध धारित्वमप्यभिहित भवतीति ' शरचापकरन्यग्र खड्गकुन्त कुठारिणमिति, सात्त्वत वचनोक्ताश ' चक्राद्यायुध बृन्देन मूर्तेन परिवारितम् ' इति सात्त्वत वचनोक्ताशश्च दर्शितौ भवत ।

एव प्रागुदाहृत स्कान्दपुराण षट्टवचनै अस्मिन्नपि षट्टे—

' तद्रूपमाश्चर्यमनेकवर्ण
किरीटमालाभिरशेष मूर्ते ।
व्यराजतादित्य इवान्तकाले
स्वरश्मिमालाभिरनेकरश्मि ॥

तद्दीप्तवक्त्रं विमलं विशोकं
जाज्वल्यमानं महता स्वतेजसा ।
अशोभताद्य वपुरब्जनेक्षण
युगान्तकालाग्निरिव प्रदीप्तम् '

इत्यनेन अनुपदोदाहृतवचनान्तरे 'मृदुचारुकपोलैश्च कुण्डलैरुपशोभितम् ' ।
इत्यारभ्य,

'सौम्यं समुच्छ्रितोरस्कं समायतविलोचनम् ।
दिव्यपीताम्बरधरं दिव्यगन्धानुलेपितम् ॥
दिव्यया वैजयन्त्याच सुस्कन्धगतया तथा ।
चकाशे तद्यथा मेघो विद्युन्मालाविराजितः ' ॥

इत्यन्तैर्वचनैश्च रक्षकत्वानुगुण सौम्याकार संहर्तृत्वानुगुण रूक्षाकारयोः भगवतः अभिधानात् प्रागुदाहृत सात्त्वत वचनेषु,

'यज्ञाध्ययन दानादि परिरक्षन्तमेवहि ।
शातयन्तं मद्वर्णानां मद्धर्म निरतात्मनाम् ' ॥

इत्युक्तरक्षकत्वानुगुणाकारः 'कल्पान्त हुतभुक्प्रभम् । ज्वलज्ज्वालावलीयुक्त ज्वलनांशुक वेष्टित'मित्युक्त संहर्तृत्वानुगुणाकारश्चाभिहितो भवति ।

एवमस्मिन् पुराणे पञ्चत्रिंशाङ्क चिह्निते षोडशाध्याये सप्तर्षिकृत श्रीनिवास भगवत्स्तुतौ,

सहस्रादित्यसङ्काश चक्रहस्ताय ते नमः ।
शङ्खहस्ताय तेनित्यं नमो विष्णोर्महात्मने ॥
नमः किरीटिने नित्यं नमः कौस्तुभधारिणे ।
नीलमेघ प्रतीकाशवपुषे ब्रह्मणे नमः ॥
असिरत्न गदाचाप शक्तितोमर पाणये ।
प्रदीप्तायुधजालाय प्रदीप्तवपुषे नमः ॥

यज्ञेशाय नमस्तुभ्यं ज्वलत्कुण्डल धारिणे ।
नमोऽस्तु पद्मनाभाय नमस्ते विश्वयोनये ॥
परावराणा पतये करालवपुषे नम ॥

इतिवचनै भगवत श्रीनिवासस्य रक्षकत्वानुगुण सौम्याकार सहर्तृत्वानुगुण भीषणाकार तदुभयानुगुण सौम्यासौम्य लक्षण द्विविधाकारायुधजालशालित्व सुस्पष्टमभिहितम् । अत अस्मिन् वामनपुराणेऽपि श्रीनिवासरूपस्य दर्शित सात्त्वत वचनोक्त रूपक रूप्यमेव प्रतिपाद्यत इत्यवगन्तव्यम् ।

एव पाद्मपुराणभागेऽपि षड्विशाङ्कचिह्नित तृतीयाध्याये —पद्मसरोवरतीरे श्रीशुकमहर्षि प्रति श्रीनिवास भगवदाविर्भावघट्टे—

तपसा तस्य सर्वात्मा सतुष्ट पद्मलोचन ।
सहर्ता रक्षिता स्रष्टा भुवनानि चतुर्दश ॥
अनुग्रहीतान्तर्यामि निग्रहीता निरन्तर ।
शङ्खचक्र गदाम्भोज राजत्कर चतुष्टय ॥
मुक्तातपत्रितानन्त सहस्रफणमण्डल ।
नागैरभिनवा कल्पै स्तपनाय मयाशुके ॥
सुमनोभिर्दिव्यगन्धै र्दिव्यालेपन चन्दनै ।
अलकृताङ्ग महिमा स्मयमान मुखाम्बुज ॥

इति वचनेषु मुक्तातपत्रितानन्तेत्याद्यर्थद्वयेन अनन्तशयनत्व नागभूषणत्वाभिधानात् दर्शित सात्त्वत वचनेषु अनन्तशयनाभूषमित्युक्तोशोऽभिहित ।

अनन्त शयन, क्रीडोपकरणमुखसुप्तिस्थान, आभूषा भूषण च, यस्य स. अनन्तशयनाभूष इति विगृहीतेन अनन्तशयनाभूष शब्देन शेषशायित्व शेषभूषणत्व चाप्यभिधीयते ।

एव मस्मिन्नेव पुराणे श्रीस्वामि पुष्करिणीतीरे श्रीशुकमहर्षिप्रति श्रीनिवास भगवदाविर्भावघट्टे सप्तविशाङ्कचिह्निते चतुर्थाध्याये 'कालकाद-

म्बिनोकान्ताकुञ्चितालकबन्धन, इत्यनेन जटाधरत्व, भोगि भोगोल्लसद्भुज इत्यनेन नाग भूषणत्व चाभिहितम् ।

एव त्रयस्त्रिशाङ्कचिह्निते दशमाध्याये स्वामिपुष्करिणीतीरे ब्रह्मादिस्तुत-श्रीनिवासाविर्भावघट्टे 'स्तुत्त्यानया प्रसन्नोऽस्मिन् विमाने परमस्व-राट् । सहस्रादित्य सङ्काश महेन्द्रुसमप्रभ । सहस्रहुतभुक् प्रख्यो विख्यातविभवोदय, । इति श्रीनिवास भगवत साम्यासौम्य लक्षण द्विवि-धाकारवत्त्वमेवाभिहित मित्यत्रापि सात्त्वतोक्तरूपानुरूप्यमेवावगम्यते ।

एव भविष्योत्तर पुराणैकादशाध्याये श्रीनिवासस्य पद्मावतीपरिणय-घट्टे भगवत श्रीनिवासस्य भूषणदानसमये नाग भूषण युग्मच बाहुरा-दिकास्तथा, इति शेषाद्रिवासिन शेषशायिन शेषभूषणस्यास्य देवस्य शेष-प्रियतमत्वमनुसदधता वियद्राजेन नागभूषणयुग्ममपि दत्तमित्यभिधीयते ।

भविष्योत्तररहस्याध्याये अशीतितमाङ्कचिह्निते पार्वती प्रति परमर-हस्य सविमान श्रीनिवास भगवद्ध्येयाकार मुपदिशता महादेवेन ।

इन्द्रनील मणिश्याम रमणीयाहिभूषणै ।
शङ्खचक्राभयानाम भूषितैश्च भुजोत्तमै ॥ " इति

यन्नाम श्रुतिसार सान्द्रजलधिस्थाने लसत्कौस्तुभ
स्वाज्ञानान्ध तमिस्रदु खहरण मत्पुत्रसंजीवनम् ।
विश्रामाप्ट वरप्रदानफलद भोगीन्द्र सद्भूषण
सर्वैश्वर्यनिदानमात्म वरद श्रीवेङ्कटेश भजे ॥

इति च श्रीनिवासभगवद्दिव्यरूपस्य नागभूषणालङ्कृत बाहुत्वमभिधी-यते । आनामोऽत्रावनति लक्षणकटितट विन्यस्त वामहस्त मुद्रा ॥

एव ब्रह्माण्ड पुराणभागे द्वितीयाध्याये—

अथाह भगवाञ्छेष माहूय पुरत स्थितम् ।
मेघ गम्भीरया वाचा हर्षोत्फुल्लविलोचन ॥

श्री भगवान्

अनन्त मत्प्रियो लोके नत्वदन्योऽस्ति कश्चन ।
तस्मान्मम प्रिय किंचित्कर्तव्य भवतानघ ॥
श्रुतंहि भवता सर्व नारदोदीरित वच ।
क्रीडासमुचिते देशे वस्तव्यमिति मेमति ॥
तत्र भूत्वा गिरिवरो भवान् वसतु भूतले ।
त्वत्फणामण्डलभुवि स्थातव्य रमया सह ॥

शेषः

अनन्तोऽहं महादेव स्थास्यामि गिरिरूपधृत् ।
भवास्तु रमया सार्ध मम सानुपु रम्यताम् ॥

इत्यादिना धरातले अनन्तस्यैव भगवत्प्रियतमस्य भगवच्चोदनेन भगवतो भोगोपकरण सुखसुप्तिस्थान भूत क्रीडाद्रिरूपेण परिणामाभिधानात् ।

अनेनापि पुराणेन 'निश्शेप भुवनानाच ध्यातव्यच धरास्थितम् । अनन्तशयनाभूप'मित्युदाहृत सात्त्वतमहितावचनोक्तांश एवाभिहितो भवति । अत्र शयनशब्दस्य भोगोपकरण सुखसुप्तिस्थानत्वेन क्रीडाद्रेरपि सग्राहकत्वात । भगवत्क्रीडार्थ धरातले क्रीडाद्रिरूपेण परिणामस्य धरास्थितमित्येतत्प्रत्यभिज्ञापकत्वात् ।

पाद्म पुराणभाग चतुस्त्रि शाङ्कचिह्नितैकादशाध्याये—

"इत्युक्त्वा गरुडेशान मधिरुह्य रमासख ।
भोगिराजगिरि गत्वा स्वामिपुष्करिणीतटे ॥
रमते रमयैकान्ते रमणीये श्रिय पति ।" इति गिरिरूपेण परिणतस्यानन्तस्य तल्पवद्भोगोपकरण सुखसुप्तिस्थानतायाएवाभिधानाच्च ।

एव ब्रह्माण्ड पुराणान्तर्गते श्रीवेंकटेश सहस्रनामाध्याये—

'कपर्दी कामहारीच' इत्यनेन 'शङ्खवान् पङ्कजकर कुङ्कुमाङ्को जयाशुक. । भोगीश कङ्कणश्शङ्खो निश्शङ्कश्शङ्किताखिल. ।" इत्यनेन

शक्तियुङ्मौक्तिकस्रग्वीत्यनेनच जटाजूटशङ्खाङ्कुश शक्त्यायुधधारित्व नाग-भूषणधारित्वचाभिहितम् । अननापि द्विविधाकारेनुगुण वेषभूषणायुधधा-रित्वप्रतिपादनपरेण यथोदिताश एवाभिहित । यद्यपि कपर्दीकामहारो चेत्यत्र कपर्दिशब्दकामहारिशब्दयो शिवपरतया तच्छरीरक परमात्मपरत्व शरीरवा-चकाना शरीरिवाचकत्वन्यायेन सुवच, तथाप्यत्र सहस्रनामपाठे बहूनामेतद्देव-तावाचिशब्दाना पाठात्तत्रैवोक्ताशस्य प्राग्विवक्षितत्वात् वचनान्तरैककण्ठ्येन इह जटाधरत्वपरताया अपि कपर्दिशब्दस्य सभवात । कामहारिपदस्य विषय-सङ्गनिवर्तकपरत्वस्यापि सभवाच्च यथोक्ताभिप्रायकत्वमपि सभवदुक्तिकमेवास्य वचनस्येतिबोध्यम् ॥

इत्थ नागभूषणस्यापि भगवति वचनसिद्धत्वात न अनेनाप्यस्य देवता-न्तरत्वसिद्धि ।

तथाच बिल्वपत्रार्चन शङ्खचक्राद्यायुधराहित्य जटाधरत्वनागाभरणधारि-त्वरूपाणि देवतान्तरत्व साधकतया वाद्यभिमतानि लिङ्गानि अन्यथासिद्धान्ये-वेति सिद्धम् ॥

किच जटाजूटधरत्व नागाभरणधारित्वयो शङ्कर एव सद्भावप्रसि द्धिप्राचुर्येऽपि नतयो वाद्यभिमत स्कन्दत्वसाधकता कथञ्चिदपि सुवचा ।

इत्थ वाद्युक्तलिङ्गानामन्यथासिद्धत्वात अस्मदुक्ताना लक्ष्मीवक्षस्कत्व श्रीवत्साङ्कत्व विन्यासविशेषप्रभृतीनामनन्ताना लिङ्गाना साक्षान्नारायणत्वश्रुतेश्च अनन्यथासिद्धत्वाच्च पूर्वोदाहृत सात्वतसंहितावचनोक्तलक्षण विजातीयापूर्वदि-व्याकारशाली श्रीनिवासाभिधाना भगवान्नारायण एवासौ श्रीवेङ्कटेश्वर नपुन स्कन्द इति सिद्धम् भवति ।

इदमत्रावधेयम् । एकोहवै नारायण आसीन्नब्रह्मा नेशान" इत्यादयोह्यनन्ता उपनिषद श्रीमन्नारायणमेव निखिलजगदुत्पत्ति स्थितिलयकारण तस्मादेवच ब्रह्मादीन् भिन्नभिन्नकार्याधिकृतान् भिन्नभिन्नस्वरूपस्वभावानुत्पाद्यमानाश्च प्रतिपादयन्ति ।

कारणेष्वविद्यमानानां गुणानां कार्येषु सङ्क्रामो न क्वचिद्दृष्टचर ।
दृश्यन्ते च लोके कारणगता एव गुणा कार्येषु सङ्क्रामन्त । अत कार्यगतै
गुणै शक्तिरूपेणापि वाऽवश्यमेव कारणगतैर्भवितव्यम् ।

इत्थं च निखिलजगद्बीजभूतस्य बहुभवनसङ्कल्पशालिनो भगवतो नारायणस्यैव निखिलजगदुत्पत्ति स्थितिलय कर्तृत्वशक्ति लक्षणस्वभाव सपन्नतया तस्मादेव तदुत्पन्नेषु सृष्टिसंहारादि तत्तत्कार्याधिकृतेषु ब्रह्मरुद्रादिषु लेशतस्तच्छक्ति सङ्क्रमणस्य वाच्यतया तत्तद्गतसृष्टिसंहाराद्यनुगुण सौम्यासौम्याकार तदनुगुणनानाविधायुधधारित्वादि लक्षणवेषमूलभूत, तथाविधो वेषो मूलकारणे भगवति नारायणे क्वचिद्रूपे अवश्य दृश्यद्वारा एवोपगन्तव्य इति सृष्टिस्थित्यनुगुण सौम्याकार तदनुगुणायुधधारित्वादि लक्षणवेषवत् संहर्तृत्वानुगुण घोराकार तदनुगुणजटाभीषणत्वसर्पभूषणत्व शक्तिपरश्वधाद्यायुधधरत्वादि लक्षणवेषोऽपि भगवति सुसगत एव ।

द्विविधाकारवत्त्वञ्च श्रीनिवासभगवतोऽस्तीति तु प्रागुदाहृतवचनेषु अभिव्यक्तम् । निखिलजगदुत्पत्ति स्थितिलयकारण सर्वशक्तिमत्त्व स्वस्यैव प्राधान्येनास्ति । अन्येषु तु स्वस्मादेव लेशत तत्सङ्क्रान्तमित्येतदाविष्करणायैव तादृशरूपशालिन स्वात्मन प्रदर्शन भगवता क्रियते ।

अत एवोक्त दर्शितसात्वत संहितावचनेषु ' सर्वतत्त्वाश्रय तत्त्वम् सर्वशक्तिमय विभु "मिति । अत एव चपाद्मपुराणे षड्विंशाङ्कचिह्नित तृतीयाध्याये - -

" तपसा तस्य सर्वात्मा सन्तुष्ट पद्मलोचन ।
संहर्ता रक्षिता स्रष्टा भुवनानि चतुर्दश ॥ " इत्यारभ्य ,

अहं प्रथमपूर्वाभि द्वात्रिंशत्कोटि शक्तिभि ।
वैष्णवीभि सेव्यमानो देव पद्मसरस्तटे ॥
श्रीभूमिनीलासहित प्रादुरासीत्पर पुमान् ॥

इत्यन्तेन भगवत सृष्टिस्थिति संहारादि कर्तृत्वमभिधाय तन्मूलभूतानन्त-वैष्णवशक्तिसेव्यमानत्व मभिहितम् ।

लोके तत्तत्कार्यानुगुणा तत्र तत्र स्थिता हि शक्तिर्वैष्णव्येव ।

यद्यद्विभूतिमत्सत्व श्रीमदूर्जितमेव वा ।
तत्तदेवावगच्छत्व मम तेजोशसभवम् ॥ इतिगीताशास्त्रोक्तन्यायात् ।

एव पाद्म पुराण सप्तविशाङ्कचिह्नित चतुर्थाध्यायेऽपि—

" कदाचिद्भगवान् विष्णु करुणागण्य पुण्य धी ।
दर्शयन् सकलान् लोकान् साक्षादक्षिपथ गत ॥

दिव्यानन्दमयाकारैर्गरुत्मच्छेष सैनिकै ।
पञ्चायुधै परिकरैर्गणैस्तु कुमुदादिभि ॥

परिबर्हा भूषणान्यजिन वस्त्राशुकानिच ।
आयुधान्यप्रमेयानि दधानैर्ब्रह्म शक्तिभि ॥

शक्तिभिश्शाकरीभिश्च सेव्यमानो मुदान्वित ।
श्रीभूमिनीला पूर्वाभि रपूर्वाकल्प भूतिभि ॥

महिषीभिर्मुदानन्द मावहन्ताभिरीशितु ।
मुमोद सह सर्वात्मा क्रीडाडम्बरडाम्बिक ॥ " इति ।

सर्वात्मत्वेन हेतुना भगवत श्रीनिवासस्य सर्वविध परिजनायुध परिकरशक्तिससेव्यत्वमभिहितम् । एवमन्यदप्येतत्पर वचनजात तत्र तत्र स्थित द्रष्टव्यम् ।

इत्थ च भगवत श्रीनिवासस्य सहारकर्तृत्वाभिव्यञ्जक क्रूराकारतदनुगुण जटा भीषणत्व नाग भूषणत्व शक्तिपरश्वथाद्यायुधधारित्वादि लक्षणवेषस्य तेनैवहेतुना अन्यत्रापि तादृशाधिकारलेशस्य स्वायत्ततयैव सङ्क्रमणमभिव्यञ्जयत तादृशवेषमात्रेण देवतान्तरत्ववर्णन न कथचिदपि सभवदुक्तिकम् ।

दर्शित पाद्मपुराणभागवचनेषु—" ब्रह्म शक्तिभि । शक्तिभि शाङ्करीभिश्च सेव्यमान " इत्यनेन, ' द्वात्रिशत्कोटि शक्तिभि । वैष्णवीभिस्से-

व्यमान ' इत्यनेन 'सर्वात्मा क्रीडाडम्बर डाम्भिक, इत्यनेनच चतुर्मुख-शकरादि तत्तदधिकार प्रयोजकास्तत्तदविकारासाधरणा चतुर्मुखशकरादि तत्तद्देवतागता अशा ऐश्वर्यविशेषप्रयोजकविशेषण रूपतया शक्तिशब्द वाच्या ये सन्ति ते सर्वेऽपि सर्वजगज्जालबीजभूते भगवति नारायणे वर्तमाना एव तत्र तत्र लेशत सक्रामन्ति तेच सर्वे अशा वैष्णव्य एव शक्तय । ताश्च शक्तयो द्वात्रिंशत्कोटि सख्याता । तासा सर्वासा शक्तीना मूलकन्द-भूत भगवतो नारायणस्य आदिम परम दिव्यरूपमेवेद श्रीनिवासरूपम् । तादृशच रूप लीलारसिकेन स्वाश्रिताना स्वीयकृत्स्नमहिमप्रदर्शन कौतुकिना भगवतैव कृपया दर्शितमिति सम्यगेव प्रतिपाद्यते ।

सर्वात्मेत्यत्र आत्मशब्दस्य स्वभावपरतया तत्तत्कार्यगत सर्वस्वभाव सपन्न इतिवा मृदात्मको घट इत्यादिष्विव आत्मशब्दस्य कारणपरतया सर्वकारणमितिवा अर्थस्य विवक्षिततया पक्षद्वयेऽपि कार्यगत सर्वस्वभाव मूल कन्दभूताकरस्थानत्वमभिधीयते ।

वामनपुराण भागस्य चतुस्त्रिंशा ध्यायान्ते च

' अशोमताद्य वपुरङ्कनेक्षण युगान्तकालाग्नि रिव प्रदीप्त ' मित्यनेन श्रीनिवासरूप भगवतो नारायणस्य आदिम स्वरूपमिति हि स्पष्टमुक्तम तदिद सर्वमनुसन्धायैव सरोयोगि भूतयोगि महायोगिनामसु आदिमदिव्यसूरिषु अन्तिमेन परमैकान्त्यग्रसरेण महायोगिनाम्ना दिव्यसूरिणा स्वीयद्राविडवेद सहितायाम्—

" लम्बजटाद्राघीय कोटीर लोहपिण्डचक्र च ।
व्याघ्ये वेष्टित फणवर काञ्चनसूत्र अहो विराजत ॥
परित प्रसृतनिर्झरवृन्द श्रीवेंकटाचले वसत ।
अस्मन्नाथस्योभावाकारावैकलक्षणीभूय ॥
इतिमूलरूपपरया त्रिषष्टितमगाथया स्फुट प्रोक्तम ।
सर्वेषाच निदान श्रीमन्नारायणस्स एक इति ॥ "

अत्र लोहपिण्डशब्दः सहर्तृत्वाकारानुगुण शक्तिकुठारादि सर्वायुधोपलक्षणम् । चक्र शब्दश्च रक्षकत्वाकारानुगुण शङ्खनन्दककौमोदकीशाङ्गादि भगवदसाधारण सर्वदिव्यायुधोपलक्षणमिति बोध्यम् ।

यद्यपि शक्तिकुठारादि महर्तृत्वाकारानुगुणायुधजातादिलक्षण असौम्यवेषोऽद्य भगवति नोपलभ्यते । रक्षकत्वानुगुण साम्यवेष एव चोपलभ्यते । तथापि विरिञ्च्यादिभि प्रार्थितेन भगवता घोरवेषमुपसंहृत्य साम्यवेषप्रदर्शनात् तस्यैव लोकरक्षणोपयिकत्वाच्च साम्यवेषमात्रेण सम्प्रति सर्वदृक्पथगोचर समिन्वे । दिव्यसूरिणातु भगवन्निर्हेतुक कृपापरिलब्धदिव्यचक्षुषा भगवद्दिव्यरूप यथावत साक्षात्कुर्वता तथाभिहितमिति न विरोध । घोरवेषमुपसंहरता भगवता तदन्तःपातिना जटानागभूषणयो पर साम्याकारतामापादितया साम्यरूपेऽपि धारणकृतम । निजवक्ष पाठभृगुपादताडनसमय विनिष्क्रान्त करवीरपुरगतनिजनित्यानपायि महालक्ष्मी पद्मसरोवर पुन प्रादुर्भावार्थनिजतपश्चर्याकरणाङ्ग तापसवेषानुकूलतया श्रीवेङ्कटाचल **श्रीरामतारकमन्त्रेण** स्वात्मान मुपासीनया वायुस्कन्दयाऽपास्मनेप्सित प्रदर्शनीयस्वीयश्रीरामवेषानुकूलतयाकार्तिगु स्वीय प्रादुर्भाव विशेषस्वभावानुकूलतया च जटावरस्य सर्वदा तल्पछत्रादिरूपेण सम्प्रति धरण्या क्रीडाद्रिरूपेण च निजपरिचरणैकपरायणस्य क्रीडाद्रिरूपपरिणतनिजाङ्ग नित्यसन्निधानहेतुप्रफलतपश्चर्यामपि कृतवतो निजान्तरङ्गकिंकरस्य फणिराजस्य भूषणरूपेणापि धारणस्य तदीयपरमप्रीत्यनुकूलतया फणि **जटा** [**टा**] भूषणत्व च सौम्याकारतामापाद्य सौम्यरूपेऽपि स्थापित, न तु परित्यक्त मित्यवगम्यते । भृगुपादताडन समयापयातलक्ष्मीपद्मसरोवरप्रादुर्भावादिवृत्तान्त भविष्योत्तरपुराणभागद्वितायाध्याये पाद्मपुराणभागान्तर्गत चतुस्त्रिंशाङ्काचाङ्कितैकादशाध्याये च द्रष्टव्य । वामनपुराणभागे एकविंशाङ्कचिह्निते द्वितीयाध्याये—

इदानी च महाभाग वायुरास्त तपश्चरन् ।
जपन्सतारक मन्त्र गणयन्नक्षमालया ॥

परात्परतरं राम मर्चयन् विधिपूर्वकम् ।
श्रीभूमिसहितं देवं चतुर्बाहुं किरीटिनम् ॥
शङ्खचक्रं धनुर्बाण पाणिं नीलोत्पलद्युतिम् ।
देवदेवं जगन्नाथ मपरोक्षं निरीक्षितुम् ॥
सर्वप्राणा मकोवायु स्तपस्तीव्र चरत्यहो ।

इति वचनैः वायोः श्रीरामतारक मन्त्रोपासकत्वम् ।

इति विज्ञापितश्शंभुः पुत्रेणाक्लिष्टकारिणा ।
विधिनाशु ततः प्रादान्मन्त्र तस्मै सतारकम् ॥
लब्ध्वा मन्त्रं महादेवात् स्कन्दः प्रीतोऽभवत्पितुः ।

इतिवचनेन स्कन्दस्य श्रीरामतारक मन्त्रोपासकत्वं च प्रसिद्धमवगम्यते । शेषस्य क्रीडाद्रिरूपेण परिणतस्य भगवन्नित्य सन्निधानार्थतपश्चर्याकरत्वादि वृत्तान्तो ब्रह्माण्ड पुराणे भागद्वितीयाध्याये ब्राह्मपुराणे भागद्वितीयाध्याये च सुव्यक्तः ।

भगवतः श्रीनिवासस्य आदिमः कृतयुगावतीर्णत्वं च वाराहपुराणान्तर्गत द्वितीयभाग तृतीयाध्याये पाद्मपुराणान्तर्गतत्रयस्त्रिंशाद्ध्याये चहितन दशमाध्याये च सुव्यक्तम् ।

तस्माद्यथोक्त जटाधरत्व भार्गीशभूषणत्वबिल्वपत्रार्चनादिलक्षण स्वामिपुष्करिणीदक्षिणतीरे विराजमानो देवः यथोक्तानन्यथासिद्धप्रमाणन्यायगणैः श्रीनिवासाभिधानः श्रियः पतिः श्रीवैकुण्ठनाथः श्रीवैकुण्ठात् श्रीवेंकटाद्रिं लोकरक्षार्थमागत स्कन्दमहादेवादि सर्वदेवतान्तर वन्द्यमान दिव्यचरणनलिनयुगलः श्रीमन्नारायण एव न पुनः स्कन्दादिशङ्कागन्धार्हः इति सिद्धं भवति ॥ इति

इत्थं यतिराजस्य प्रगल्भवाणीप्रचारजर्झरिते ।
श्रीवेंकटेशविषये स्कन्दविवादे नृपोऽब्रवीच्छैवान् ॥

यादवराजः--

भो भो शैवा यदिद स्कन्द कथातूलमञ्जनाद्रीशे ।
आरोपित भवद्भिर्मिलितैर्महता श्रमेण सुचिरेण ॥
सर्वं तदेतदधुना भवत्कथातूल मञ्जसोच्चाल्य ।
यतिपति वाणी झञ्झामारुतवेगेन यापित क्वापि ॥
अद्यश्वोवा कथयत यद्यस्त्युचित सदुत्तर शैवा ।
अविचारितरुचिरेण त्वलमलमाभास युक्तिजालेन ॥
इत्थ सदसि तदानी यादवराजेन निगदिताश्शैवा ।
पर्यालोच्यान्येद्यु प्रतिवचन दातुमभ्युपागच्छन् ॥
तदनु यतीशानमपि प्रत्यवदद्यादवक्षितीशान ।
तदुदितसु निपुणवाणी श्रवणेनात्यन्त विस्मितस्वान्त ॥
भो भो श्रीरामानुजयोगिन्नन्येद्युरथपुनर्भविता ।
एतद्विचारशेष तदा समायातु सदसि त्वमपि ॥
इत्थ सदसि तदानी समापिते यादवक्षितीशेन ।
व्याघ्रभयादिव मुक्ता यतिराजभयाद्ययु स्स्वगेहान्ते ॥

अथ भगवान् श्रीरामानुजयतिपुरन्दरोऽपि राजानमनुमान्य सपरिवार स्वस्थानमागमत ।

इत्थ सदस्येषु सर्वेषु गतेषु यादवराज सचिवैस्सह श्रीरामानुजयोगिवैभव निपुणतर तदीयवादवैदग्ध्यच सम्यगनुसन्धाय विद्धहृदय तदीयमेव वाद न्याय्यतर विपरीतमेवचेतरेषा वाद मन्यमान श्वोवा किनु वदिष्यन्ति शैवा विचारयिष्याम इति चिन्तयन्नासीत् ।

तत परेद्यु सर्वे शैवा मिलित्वा स्वपक्षबल सर्वमपि सम्यगालोच्य राज्ञ सदसि स्वपक्षविजय निराशाकातरहृदया तथापि रुग्णस्य यावत्कण्ठगतप्राण चिकित्सनीयतान्यायेन यावच्छक्ति प्रतिवाद कर्तव्य एवेत्यनुसन्दधाना सभा समाजग्मु ।

तदनु श्रीरामानुज मुनिरपि परिवार सहित उपयात ।
राज्ञाभिवन्दिताङ्घ्रिस्तस्मै विदधेच मङ्गलाशास्तिम् ॥

तदनु सराजसु सर्वेषु सभास्तारेषु सदसि समुपविष्टेषु समाहितमनस शैवा राजान मूचु ॥

**शैवाः**—

भोराजन् स्वामिपुष्करिणी दक्षिणतीरे विराजमानोऽयं देव स्कन्दो-वा महादेवएववा अथवा अन्ततो हरिहरावतार रूपोवा भवितुमर्हति न पुनरय केवल विष्णुरूप इति तावद्वय वदाम ।

तत्र स्वामिपुष्करिण्या दक्षिणतीराविर्भूतस्य अस्य देवस्य स्कन्दत्व-पक्षेऽपि न विष्णुलक्षण दर्शन प्रतिपादनविरोध । स्कन्दस्य विष्णुकलाश-मिश्ररूपताया अपि वामन पुराणभाग प्रतिपन्नतया तदनुरोधेन तदाविर्भाव-काले विष्णुलक्षण भूत चक्राद्यायुधव्यञ्जन बाधकाभावात् । वामनपुराण-भागे च एकविंशाङ्कचिह्निते द्वितीयाध्याये बृहस्पत्युक्तस्कन्दोत्पत्तिक्रमघट्टे —

मा विषीद महाबाहो देवसेनापतेऽग्रणो ।
कि न स्मरसि चात्मान वैष्णव धाम शाश्वतम् ॥

इति वचनेन ,

सती च सा पर्वतराज कन्यका
प्रवर्धते मेनकयोपलालिता ।
तथैव भयाज्य चशङ्कर विभुम्
सुरेश्वर प्रार्थय तारकान्तकम् ॥

विष्णो कलाशो भविता भगवान्न सुखावह इति वचनेन बृहस्पतिकृत-स्कन्दस्तुतिघट्टे—

त्वा प्रपद्ये सुवर्णाभ शङ्करात्मज शङ्कर ।
त्व विष्णुस्त्व विधाता च त्व रुद्र कालरूपधृक् ॥

इति वचनेन च स्कन्दस्य विष्णवशमिश्रत्व ह्यवगम्यते ।

एव एकवक्त्रो द्विबाहुश्चेत्येकवक्त्रत्वदशाया द्विबाहुत्ववत् 'द्वादशहस्त-विराजित हेते दु खपरामर वैरि हरेश ' इत्यनेन षड्वक्त्रत्व दशानुगुण्येन

द्वादशबाहुत्ववच्चतुर्बाहुत्वमपि कामरूपस्यास्य सम्भवितुमर्हतीति न चतुर्बाहुत्व-दर्शनविरोध ॥

अथवा महादेव एवाय भवितुमर्हति । अस्यैव जटाधरत्व नागाभरणत्वादि प्रसिद्धिप्राचुर्यात् वैष्णवैर्निखिल जगन्मूलकारणत्वेनाभ्युपगते विष्णौ सर्वलक्षणोपपादनन्यायनैव अस्माभि तथात्वेनाभ्युपगते महादेव एव सर्वलक्षणोपपादनसभवाच्च । किच अस्य देवस्य हरिहरलक्षणेषु प्रतिपन्नेषु हरिलक्षणैरेनम् हरिमेव स्वैर ब्रुवाणेषु वैष्णवेषु हरलक्षणै एन हरमेव ब्रुवाणान् अस्मान् वा को निरोद्धु शक्ष्यति ।

यद्वा हरिहरावताररूपएवाय देव उभयविधलक्षण दर्शनानुरोधात् प्रतिवाद्युदाहृततन्मतकूटस्थदिव्यसूरिप्रबन्धगाथाप्रामाण्याच्च ।

इत्थ च स्कन्दपुराणप्रथमभागान्तर्गताष्टमाध्याये --

येस्मरन्ति महादेवम श्रीनिवास विमुक्तिदम् ।
कीर्तयन्त्यथवा विप्रा तेमुक्ता पापपञ्जरात् ॥ इत्यत्र

श्रीनिवास महादेव येर्चयन्ति सकृन्नरा ।
कि दानै कि व्रतैस्तपा कि तपोभि किमध्वरै ॥ इत्यत्र ।

एवमन्येष्वपि कतिपयश्लोकेषु श्रीनिवासमहादेवशब्दाभ्यामुभाभ्यामस्य देवस्य निर्देशा सगच्छन्ते ।

एवम् पाद्मपुराणभागस्थसप्तविशाङ्कचिह्नितचतुर्थाध्याये तद्देवाविर्भावघट्टे—अष्टमीन्दु कलाधार ललाटस्थोर्ध्वपुण्ड्रक । इत्येतद्देवविशेषणमप्यस्य हरिहरावताररूपत्वसाधकम् । तत्र महादेवलक्षणचन्द्रशेखरत्व विष्णुलक्षणोर्ध्वपुण्ड्रधरत्वयो द्वयोरप्यभिधानात् ।

तस्मादेतान् सर्वानपि पक्षानतिक्रम्य केवल विष्णुरूप एवाय देव इति प्रतिवादिपक्षो नांगीकर्तु युक्त ।

इत्थ शैवैरुक्त प्रदर्शयद्भिर्बल निज सर्वम् ।
अपजयकातरहृदयान् प्रतिवादमुवाच यादवनृपस्तान् ॥

**यादवनृपः**

भो भोश्शैवा यूयं बहुलायासकिमर्थमाचरेथ ।
प्राच्यैस्तदुपन्यासैरिमममपि वादं समाहितं मन्ये ॥
अतिगभीरं रामानुज मुनिवादं पुरोदितश्शृण्वन् ।
कोवा भवतां वादे प्रतिवचनं भवितु मक्षमो भविता ॥
भवतावादस्सर्षपवाटीकमाटीकते तदीयस्तु ।
घनगभीरोवादः सुमेरु गिरिणा समाननां जयति ॥
अहमेवाद्यैव भवद्वादं प्रतिवचनदाननिपुणोऽस्मि ।
एवमपि हरिहराकृतिवादं श्राव्यं ममास्तिकिंचिदिह ॥
तत एनमेव रामानुजमुनिं महमेष चोदयाम्यद्य ।
नैनैवचोच्यमानं शृणोमिवचनं सुजातवाटीकम् ॥

इत्थं शैवान् प्रतिभाष्य स **यादवराजः** -

भो रामानुजमुने भवन्मुखादेव अस्यापि वादस्य समाधिमधिगन्तु-मिच्छामि । तत्कथ्यतां समुचितमुत्तरमिति भगवन्तं रामानुजमुनिमेव चोदयामास ।

ततो भगवान् रामानुजमुनिरपि प्रतिवचनमारचयामास ।

**रामानुजमुनिः**

भोराजन् भवदीयहृदयशङ्कायां तत्त्वपदवीदवीयस्यां दिष्ट्या वि-निवर्तमानायां सम्प्रति इममनुवर्तमानमपिदश सुप्रभातायामपि रजन्यां भास्करोदयादर्वागीषदनुवर्तमानमिव तिमिरांश मन्ये ।

भोराजन् यदेते वादिनो मन्यन्ते—स्कन्दे विष्णवंशसद्भाववचनात् विष्णुलक्षणं दर्शनाविरोध इति, कामरूपतया षट्बाहुत्ववच्चतुर्बाहुत्वमस्यापि संभवे न तन्निर्देशाविरोध इति च, तदत्यन्तमसाधु

" यद्यद्विभूतिमत्सत्वं श्रीमदूर्जितमेववा ।
तत्तदेवावगच्छ त्वं मम तेजोऽशसंभवम् ॥ "

इति गीताशास्त्रदशमाध्याय वचनेन सर्वत्रैव श्रीमदूर्जित सत्त्वसामान्ये विष्णव शेनैव तथात्वसम्भवात्तया तन्न्यायेन अस्मिन्नपि प्रबलदेवसेनाधिपत्यादि श्रीमत्त्वनिर्वाहाय तदश सद्भावाभिधानमात्रेण भगवदसाधारण लाञ्छन दर्शनायोगात् ।

वचनस्य अन्यत्र सुप्रसिद्धचतुर्बाहुविषय व सम्भवदुपेक्ष्य अप्रसिद्धस्वात्प्रेक्षामूल काल्पनिक चतुर्बाहुविषयत्वकल्पनाया नीतिविदामसम्मतत्वाच्च ।

यथाहि गीताशास्त्र दशमाध्याये सेनानीनामहस्कन्द ' इति विष्णवशयुक्तत्वमुक्त तथैवात्रापि स्कन्दस्य विष्णुकलाशमिश्रत्वमभिहितमिति न ततोऽत्र कश्चिदस्ति विशेष । तावन्मात्रेण भगवदसाधारणचक्रादि लाञ्छनदर्शनावश्यकत्वे ' अश्वत्थस्सर्ववृक्षाणा ' मित्युक्ताश्वत्थेऽपि तद्दर्शनमापद्येत ।

कि बहुना ' नाविष्णु पृथिवीपति 'रित्युक्त्या पार्थिवमात्रस्यापि विष्णवशमिश्रत्वावश्यकत्वेन सर्वत्र भगवदसाधारण चक्रादिलाञ्छनदर्शनप्रसङ्गो दुर्वार एव भवेदिति सम्यगवधार्यताम् ।

किंच वामनपुराणभागे एकविंशाङ्क चिह्नित द्वितीयाध्यायान्ते ।

' कृत स्नान सरस्तीरे कुमार समुपाविशत् ।
दृष्ट्वा तपन्त वायुच तत्समीपे षडानन ॥
त्रिसन्ध्य देवदेवेश नारायणमनुस्मरन् ।
अनिष्ठत्तपउग्रच समाधिध्यान सयुत ॥

ध्यायन्नारायण देव शङ्खचक्रधर परम् , इति श्रीवेंकटाचलमागतस्य कुमारस्य तारकवधजनितस्वीयहत्यादोषपरिहारार्थ तपस्यत शङ्खचक्रधर श्रीमन्नारायणमुद्दिश्यैव तपश्चर्याकरणस्य कथनात । चतुर्विंशाङ्कचिह्निते पञ्चमाध्याये इत प्राक्कालप्रभृति तपश्चर्यापरायणस्य वायोस्तप फलतया श्रीनिवासाख्यस्य भगवतो नारायणस्य प्रादुर्भावमभिधाय तद्वदेव स्कन्दस्यापि स्वतप -फलतया तस्यैव नारायणस्य प्रत्यक्षसाक्षात्कारस्य ततोयावत्कल्प तदाराध-

कत्वलक्षणवरलाभस्यच स्पष्टमभिधानाच्च आराधकभूत स्कन्द तदाराध्यदेवता-
भूतश्च स्वामिपुष्करिणीदक्षिणतीरे आविर्भूत श्रीनिवासाभिधान श्रीमन्नारायण
इति स्पष्टमेव प्रतीत्या तयोरैक्य नह्यनुन्मत्त कश्चिद्ब्रूयात ।

स्कन्दस्य श्रीनिवासाराधकत्व श्रीवेंकटाचलमाहात्म्यपरपुराणभागेषु
प्रायश सर्वत्र प्रसिद्धम ।

अत एव च वाराहपुराण प्रथमभाग एकषष्टितमाङ्कचिह्निते एकोन-
त्रिंशाध्याये श्रीनिवासाष्टोत्तरशतनामावल्या 'कुमाराकल्पसेव्याय' इति ।
'कुमारधारिकावासस्कन्दाभीष्टप्रदाय च' इति च नामद्वय निर्दिष्टम् ।

किं च इद तावदत्र वादिनः प्रष्टव्या । स्वामिपुष्करिणीदक्षिणतीरे
सम्प्रति सर्वदृक्पथगोचरार्चारूपेण कश्चिद्देवो विराजते । तारकासुरवध जनित
हत्यादोषपरिहाराय विष्णुमुद्दिश्य तपश्चर्याकरणार्थ श्रीवेंकटाचलमागत स्क-
न्दोनाम कश्चिद्देव पुराणप्रतिपन्न । स्वामिपुष्करिण्या दक्षिणतीरे ब्रह्मादि-
सकलदेवदेवर्षिब्रह्मर्षि राजर्षिप्रमुखविरचितपरमतपश्चर्याफलतया सर्वेषामेव तेषा
प्रत्यक्षगोचरता गतोऽप्राकृतदिव्यविमानेन सह प्रादुर्भूत श्रीनिवासाभिधान
कश्चिद्देव पुराणप्रतिपन्न । तेष्वेतेषु देवेषु प्रथम किं द्वितीय उत तृतीय
इति ॥ न चात्र प्रथम पक्षोयुक्त । स्वपापहरणार्थ विष्णुमुद्दिश्य तपश्चर्या-
करणाय वेंकटाचलमागतस्यास्य स्कन्दस्य अत्र श्रीनिवासभगवदाविर्भाव तत्सा-
क्षात्कारार्थतपश्चर्याकरणाय आगताना ब्रह्मरुद्रेन्द्रादि सर्वदेव सर्वमहर्ष्यादीना-
मिव भगवदाराधकतामात्रेणावस्थानस्यैव न्याय्यत्वेन एतस्य परमाराध्यतयाव-
स्थाने कारणाभावात् कुमारधारातीर्थेवास्य नियतवासप्रतिपादनेन स्वामिपुष्क-
रिणीदक्षिणतीरे नियतवासस्यैवासिद्धे । तादृशस्थले अर्चारूपेणास्य प्रतिष्ठा-
पन केनचित्कृतमिति कुत्रापि वेंकटाचल माहात्म्यपरपुराणभागेषु प्रतिपादना-
दर्शनात् । प्रत्युत तृतीयस्यैव. देवमहर्ष्यादिप्रार्थनया तत्र नित्यसन्निधानस्य
शङ्खराज तोण्डमानूचक्रवर्तिप्रभृतिभिरर्चारूपस्थापनालयनिर्माण पूजाप्रवर्तना-
दीना च पुराणप्रतिपन्नत्वाच्च ।

अथास्तु द्वितीय एवपक्ष इति चेत् तर्हि नासौ स्वामिपुष्करिणी-दक्षिणतीरे अर्चारूपेण सम्प्रति सर्वदृग्गोचरो विराजमानोदेव एव स्कन्द अपितु स्कन्दादन्य एवेति सिद्ध भवति ।

तृतीयस्तु न स्कन्द । स्कन्दस्य ब्रह्मरुद्रेन्द्रादि सर्वदेव सर्वमहर्ष्या-दीना च तपश्चर्याफलतया तदाराध्यतया तस्योऽर्थान्तरभूतस्यैव तत्र तदा-विर्भावात । तदाविर्भावप्रकरणेषु श्रीमन्नारायण एव श्रीवैकुण्ठात् क्रीडार्थ लोकरक्षणार्थं च श्रीवेंकटाचले तथा आविर्भूत इति नारायणपदादिश्रुत्यैव नारायणतया स्फुटप्रतिपन्नस्यास्य स्कन्दशङ्कागन्धानवकाशाच्च ।

तस्मात स्कन्दवादोऽय किंचिदपि पूर्वोक्तग्रन्थमर्मपर्यालोच्यैव मन्द-मतिभि प्रवर्तित इति न विदुषामुपादेय ।

अथ नाप्यसौ महादेव पूर्वोक्तरीत्या तृतीयस्य महादेवत्वेएव तदर्चा-विग्रहरूपस्य प्रथमस्य तथात्वभिमानसम्भवात । तृतीयस्य नारायणताया तदाविर्भावप्रकरणस्थ नारायणपदादिश्रुत्यैवाभिव्यक्ततया महादेवत्वकथाया अपि दूरतो निरस्तत्वाच्च ।

स्कन्दागमनानन्तर श्रीनिवासभगवत प्रकटतर महाविर्भावकालात किंचिन्तरस्तात ब्रह्मेन्द्रादिदेवमहर्ष्यादिगणवदेवोऽयमपि श्रीवेंकटाचलमागत्य तदाविर्भाव साक्षात्कारादिभि यथेमुपत्यकाया तपश्चर्यापरायण स्थित्वा तदा-विर्भावकाले जायमान कोलाहल श्रुत्वा तत्र सनिधाय श्रीनिवासभगवन्त अप्राकृत-दिव्यविमानेन सह प्रादुर्भूत प्रदर्शितनिखिलजगदुदयरक्षाप्रलयहेतु निजादिम दिव्यरूपमपरोक्ष निरीक्ष्य अभिवन्द्य स्वमनोरथविज्ञापनादि सलापच कृत्वा पुन सगण स्वस्थान कैलासलोक गत इति ।

श्रीनिवास भगवास्तु सविमान श्रीवेंकटाचल एव कृतनित्यसंनिधान स्थित इति च वामनपुराणभाग स्पष्टमेवोपदिष्टमिति कथमसो श्रीनिवासो महादेवो भवितुमर्हति ।

यथोक्त वामनपुराणे द्वात्रिंशाङ्कचिह्नित तृतीयाध्याये —

" तपसोऽथे प्रयानेतु स्कन्दे काञ्चननेजसि ।
देवसेनासमायुक्ते धनुश्शक्तिधरे द्विजा ॥
भर्तारि भक्ति नम्राथ पुत्र वात्सल्य चोदिता ।
पप्रच्छ पार्वती शंभु हर चन्द्रार्धशेखरम् ॥
किं करिष्यतिपुत्रो मे तत्रबालस्त्रिलोचन ' ।
कथं द्रक्ष्यति तं देवं मचिन्त्यो ब्रह्मणापि य ॥
इति पृष्टस्स ता प्राह सोत्प्रास परमेश्वर ।
शृणुदेवि पर गुह्य भविष्यत्त मयोच्यते ॥
सर्वेच मुनयस्तस्मिन आगमिष्यन्ति पर्वत ।
द्रष्टुकामा पर ब्रह्म तपस्तप्तुमनुत्तमम् ॥
देवामनुष्या पितरो गन्धर्वा यक्षराक्षसा ।
सिद्धास्सा-याश्चगरुडा पन्नगाऋषयस्तथा ॥
चरिष्यन्ति तपस्तस्मिन गिरौ गिरिवरात्मजे ।
प्रत्यक्ष परमात्मान द्रष्टुकामास्सनातनम ॥
आवा तत्रगमिष्याव कालेनमहता प्रिये ।
द्रष्टु तत्परमं ब्रह्म तत्त्व नारायण परम ॥
श्रीवेंकटाचले पुण्ये यत्तु प्रादुर्भविष्यति ।
तत्प्रादुर्भावहेताव कर्तुंचापिमहत्तप ॥
आवाभ्यामपि गन्तव्य तथान्यैर्देवनर्षिभि ।" इति

चतुर्विंशाङ्कचिह्निते पञ्चमाध्याये—

" तत पश्चात्तु शङ्खस्य राज्ञ प्रियचिकीर्षया ।
विश्वविख्यात सुमहाप्रादुर्भाव करिष्यति ॥
तस्य हेतोस्ततः पूर्व कर्तु च सुमहत्तप ।
सर्वलोकहितायैव शङ्खराजेनवैहरि ।
श्रीवेङ्कटाचले पुण्ये प्रादुर्भाव गमिष्यति ॥

आवां तत्र गमिष्याव श्चिरकालादनन्तरम् ॥
गमिष्यन्ति सुरास्सर्वे सहसर्वैर्महर्षिभिः ।
तदा कुमारं द्रक्ष्यावो विष्णुभक्तिपरायणम् ॥
इत्युक्ता शंकरेणाथ विरराम तदा सती ।
ततः कालेन महता शंकरं गमनोन्मुखं ॥
बभाषे पार्वतीदेवी पुत्रदर्शनलालसाम् ।

**शंकरः**— अयं सकालस्संप्राप्तो यं पुरात्तं मयोदितं ॥
श्रीवेंकटाह्वयं गन्तुं महापुण्यं नगोत्तमम् । इति ।

तत्रैवाध्याये उत्तरत्र

आवां गच्छाव तं शैलं गिरिजे गणसंयुता ।
नित्यवसाव तत्रैव पश्यन्तो गुहमव्ययम् ॥
देवसेनापुलिन्दाभ्यां विहरन्तं वृषाचले ।
इत्युक्त्वा वृषमारूढः पार्वत्या सह शंकरः ॥
सगणश्च ययौ स्कन्दं द्रष्टुं वृषभाचलम् । इति ।

एवमष्टाविंशाङ्कचिह्निते नवमाध्याये महर्षिगणस्य अगस्त्यस्य श्रीनिवास भगवदाविर्भावनिरीक्षिणः श्रीवेंकटाचलं प्रदक्षिणाकुर्वतो दक्षिणदिश्युपत्यकायां कपिलतीर्थसन्निधौ श्रीनिवासभगवदाविर्भावार्थं समाधिं कुर्वता स्थितेन सगणेन महादेवेन समागमसंल्लापादिकं जातमित्यभिहितम् । पञ्चत्रिंशाङ्कचिह्नित षोडशाध्याये —

श्रुत्वात शब्दमतुलं ब्रह्मा लोकपितामहः ।
ज्ञात्वाऽथ वासुदेवं तं हरिं प्रत्यक्षतां गतम् ॥
आजगामाथ तत्पार्श्वं कृष्णस्याक्लिष्टकारिणः ।
मुनीन्द्रैर्देवसङ्घैश्च गन्धर्वैश्च समाहृतः ॥
भगवान् शंकरश्चापि त्र्यम्बकस्त्रिपुरान्तकः ।
ज्वलद्भास्कर संकाशः जटामण्डलशोभितः ॥

तेनशब्देन विज्ञाय सान्निध्य हरिमेवम ।
अभ्यगादाशु तत्पार्श्वे द्रष्टु त वसुधाधिप ॥

इत्यादिना सकोलाहलश्रीनिवासभगवदाविर्भावानन्तर तत्कोलाहल-श्रवणेन ब्रह्मरुद्रेन्द्रादिसर्वदेवसर्वमहर्ष्यादि समागमतत्तत्कृत भगवद्वन्दन स्तोत्र-प्रार्थनादिकमभिहितम् ।

अष्टत्रिंशाङ्क चिह्निते एकोनविंशाध्याये--

कथ सभगवाञ्छम्भुश्शकरश्चन्द्रशेखर ।
प्रयात पर्वताद्दिव्य कैलास स्वालय शिव ॥

इत्यादिना कैलास प्रति शिवस्य गमनमेवाभिहित न पुन स्वामिपुष्क-रिणी दक्षिणतीर एवावस्थानम् । श्रीनिवासभगवतस्तु स्वामिपुष्करिणी-तीरे आकल्पान्तवास इति च । आकल्पान्त वसामीह जगत्पालनकारणा-दिति चतुर्विंशाङ्क चिह्नित वामनपुराण भाग पञ्चमाध्यायस्थभगवदुक्त्या महा-देवेनैवानूदितया व्यक्तमवगम्यते ॥

एवमेकोनपञ्चाशाङ्कचिह्नित वाराहपुराणप्रथमभागसप्तदशाध्याये श्रीनि-वासभगवदाविर्भावघट्टे श्रीवेंकटाचले नाम पार्थयतोऽपिमहादेवस्य अप्राकृता-चले प्राकृतानामाराध्यतयाऽवस्थानानौचित्य मालोचयता श्रीनिवास भगवता तदुपत्यकायामेव वासोऽभ्यनुज्ञात इति च प्रागेवोक्तम् ।

तत्रापि 'आकल्प च वसामीह वेंकटाह्वयभूधरे' इति श्रीनिवासभगव-तैव महादेव प्रति स्वस्य श्रीवेंकटाचले आकल्पवास प्रतिज्ञातोविज्ञायते ।

इत्थ महादेवस्य श्रीनिवासाविर्भावकाले तत्साक्षात्काराभिवन्दनाद्यर्थ ब्रह्मादिवत् स्वामिपुष्करिणीतीरे आगत्य गमनमात्रस्यैव प्रतिपन्नत्वात् तत्राविर्भू-तदेवस्यैव तत्र नित्यवासस्य प्रतिपन्नत्वात् तस्य च ब्रह्मरुद्रादि सकलदेवमहर्ष्या-दिवन्द्यस्थानीयतायाः तदाविर्भावप्रकरणस्थ भगवदसाधारण नारायणपदादि श्रुत्यैव नारायणरूपतायाश्च प्रतिपन्नत्वाच्च तदर्चावतारभूतोऽय देवो न महा-देवो भवितुमर्हति ॥

किं च महादेवस्य लिङ्गाकारेणैव आराध्यतायाः लोके शास्त्रे च प्रसिद्धतया सकलावयवशालिमूर्तिमदर्चाविग्रहरूपेणाराध्यता काप्यप्रसिद्धा प्रतिषिद्धा च शास्त्रेणेति नासौ महादेवः ।

महादेवस्य सकलावयवशालिमूर्तिमद्विग्रहरूपेणाराध्यताप्रतिषेधः लिङ्ग-रूपेणैवाराध्यता च श्रीवेङ्कटाचलमाहात्म्यपरे भविष्योत्तरपुराणभाग-द्वितीयाध्यायेऽपि प्रत्यपादि। एतानाम। तस्यैतस्य श्रीनिवासदेवस्य महादेवा-दर्थान्तरभूततदीयपरमापास्यभूतनारायणरूपत्वादेव एकपष्टितमाङ्कचिह्नित वाराहपुराणप्रथमभागैकानत्रिंशाध्याये अष्टोत्तरशतनामावल्याम् उपत्यका-प्रदेशस्थशङ्करध्यातमूर्तये इति नाम, ब्रह्माण्डपुराणखिल श्रीवेङ्कटेश सहस्रना-माध्याये श्रीनिवाससहस्रनामपाठे 'कालरागस्य कालकण्ठवन्द्य कालकलेश्वर' इत्यत्र कालकण्ठवन्द्य इति नाम, 'सुवर्णमुखरीतीर शिवध्यातपदाम्बुज' इति नाम च तस्य पठ्यते। अत एव च भविष्योत्तरपुराणोत्तरखण्डान्तर्गता-शीतितमाध्याये पार्वतीं प्रति महादेवेनैव श्रीनिवासनाम्नः श्रीवेङ्कटेशस्य स्वीय-नित्यहार्दपरमरहस्यध्यानविषयपरमोपास्यभूतनारायणरूपता प्रस्फुटमेव अभिहिता दृश्यते ।

यदुक्तं जटाधरत्वनागभूषणत्वयोः महादेव एव प्रसिद्धिप्राचुर्यादसौ महा-देव इति तदयुक्तम् । भगवद्रमावारणनारायणपदादिश्रुत्या अस्य देवस्य नारायणत्वे स्फुटतरं निर्णीयमाने लिङ्गेन देवतान्तरत्वनिर्णयायोगात् भगवदव-तारेष्वपि तादृशलिङ्गसद्भावस्य प्रमाणप्रसिद्धतया प्रागेवोदितत्वाच्च ॥

किं च रुद्रस्य नानावतारकथाया अभावेन एकविधे तदीयरूपे सर्वदा जटाधरत्वनागभूषणत्वयोः सद्भावेन तयोस्तत्र प्रसिद्धिरिति ।

विष्णोस्तु नानावतारशालिनः क्वचित्तादृशविशेषणसद्भावात् क्वचिद-सद्भावाच्च तयोः प्रसिद्धिप्राचुर्यं नास्तीति च वादिभिर्मन्यते ।

तदयुक्तम् । प्रतिकल्पभाविषु विष्णोर्नानावतारेषु यस्मिन् यस्मिन्नवतारे यद्यल्लक्षणं प्रतिपन्नं तत्तदवतारेषु तत्तल्लक्षणदर्शनं तस्य प्रतिकल्पनियतभाव्येव

उपलभ्यत इति प्रसिद्धिप्राचुर्यस्यानपायात् । प्रत्युत तादृशलक्षणस्य एकैककल्पे रुद्रस्य एकरूप एव सद्भावेन भगवति नानावतारेषु सद्भावेन च रुद्रगततत्प्रसिद्ध्यपेक्षया भगवद्गत तत्प्रसिद्धेरेवाधिकत्वाच्च ।

जटाधरत्व भगवतो बहुष्ववतारेषु बहुभि प्रमाणै प्रसिद्धम् । सुप्रसिद्धं च श्रीरामावतारे श्रीरामायणादिष्विति प्रागेव ज्ञापितम् ।

श्रीरामावतारे जटाधरत्वप्रसिद्धिश्च श्रीवेंकटाचलमाहात्म्यपरे ब्रह्माण्डपुराण खिल श्रीवेंकटेशसहस्रनामाध्यायेऽपि 'जटावान् पर्णशालास्थो मारीचबलमर्दक' इत्यनेन दर्शिता ।

नागभूषणत्व भगवदवतारेषु श्रीवेंकटेशावतारस्य सुप्रसिद्धस्वरूपनिरूपकत्वावर्तकधर्म इति च दर्शित सहस्रनामाध्याये

'मृगयाऽक्षीणसन्नाह शबराजन्यतुष्टिद ।
स्थाणुस्थो वनतयाज्ञ साविर्तोह्यशरीरवान् ॥
भोगीन्द्रभोगसंस्थानो ब्रह्मादिगणसेवित ।
सहस्रार्कच्छटा भास्वद्विमानान्तस्थितो गुणी ॥'

इत्यादि श्रीवेंकटेशावतारलक्षणप्रकरणे 'भोगीन्द्र भोगसंस्थान' इत्यनेन दर्शितम् । भोगीन्द्रभोग संस्थानवस्तुसंस्थानशब्दित असाधारणस्वरूपनिरूपकधर्मो यस्य स इति विगृहीतेन भोगीन्द्रभोगसंस्थानशब्देन नागभूषणत्वस्यैवाभिधानात् । एतदवतारासाधारण मृगयाऽक्षीणसन्नाहत्व शबराजन्यतुष्टिदत्वादिधर्मसाहचर्येण अस्य धर्मस्याभिधानात् असाधारणस्वरूपनिरूपकधर्मत्वसिद्धेश्च ।

अत्र स्थाणुस्थ इत्यभिधान भविष्योत्तरपुराणोत्तर खण्डगत श्रीवेंकटेशरहस्यानुसवाख्याशीतितमाध्याये श्रीवेंकटेशावतारस्य सततमहादेवहृदयावस्थित परमरहस्य ध्यानानुगोचर ध्येयवस्तुरूपताऽभिधानसमानाभिप्रायकमिति । अशरीरवानित्येतच्च श्रीवेंकटेशस्य सविमानलक्षणदिव्यविग्रहस्य सर्वदृग्गोचरत्व तदभावप्रयोजकान्तर्हितत्वानन्तर्हितत्वदशयो सर्वत्र पुराणेषु प्रतिपन्नत्वात्

तादृशदशाद्वयाभिप्रायेण दर्शितभविष्योत्तरपुराणोत्तरखण्डाशीतितमाध्याये निराकारत्वसाकारत्वनिर्देशाच्च तत्रान्तर्हितदशापन्नविग्रहादिकत्वपरतया तत्समानाभिप्रायकं तत् सर्वदृश्यतया शरीररहितत्वदशार्थकमितिच बोध्यम् ।

भगवदितरेष्वपि नागभूषणत्वं महादेव एव प्रसिद्धमित्यप्यसाधु । वैनतेये नागभूषणत्वस्य सुप्रसिद्धतरत्वात् ॥ पाद्मपुराणभागषड्विंशाङ्कचिह्नित तृतीयाध्याये शुकमुनिप्रति पद्मसरोवरतीरे श्रीनिवासभगवदाविर्भावघट्टे—

पञ्चात्मनः सुपर्णस्य पञ्चोपनिषदात्मनः ।
पञ्चवक्त्रप्रतिकृतः पञ्चावर्वाङ्गसपदः ॥
ऋग्यजुस्सामवपुषो नागाभरणभूषितः ।
अप्रमेयप्रभावस्य स्कन्धपीठमधिष्ठितः ॥

इत्यत्र श्रीनिवासभगवदधिष्ठानभूतवैनतेयस्य नागभूषणत्वं सुप्रसिद्धं दर्शितम् ।

भगवच्छास्त्रैश्च दिव्यायुधवाहनादिरूपाणां नित्यसूरिणां भगवत्तेजश्शक्त्युपबृंहितरूपत्वेनैव वस्तुतायाः सिद्धत्वात् दर्शितवैनतेयशक्तिविशेषस्यापि विष्णुशक्तिविशेषरूपतैव सिद्धा ।

इत्थं जटाधरत्वादिलक्षणानां भगवद्दवतान्तरविशेषलक्षणतायाः अपि शास्त्रसिद्धत्वेन तेषां देवतान्तरलक्षणतामात्रमनुसन्धायानिर्वादिभिः चक्रादिभगवल्लक्षणैरस्य देवस्य वैष्णवैः विष्णुत्वाभिधानं जटाधरत्वादि हरलक्षणैर्हरत्वं वदतामस्माकं को निरोद्धेति वादः परास्तः । चक्रादि लक्षणानि तु भगवदसाधारणान्येवेति तु दर्शितं वामनपुराण एव महादेवेनैव स्वस्य भगवतश्च संवादमनुवदता पार्वतीं प्रति कथितम् । द्वाविंशाङ्कचिह्नितवामनपुराणतृतीयाध्याये—

एतच्छ्रुत्वाऽम्बिका प्राह शंकरो लोकशंकरः ।
अनादिनिधनं दिव्यमप्रमेयपराक्रमम् ॥
सहस्रारसमायुक्तं कोटिसूर्यसमप्रभम् ।
सुदर्शनाख्यं तच्चक्रं विष्णोरेव तु पार्वति' ॥

धर्तुमन्यैर्नशक्यं तत्तविना पुरुषोत्तमम् ।
तेन चक्रेण दिव्येन दग्धा वाराणसी पुरी ॥

सा राजधानी मे दिव्या कृत्याहेतोर्विनाशिता ।
कस्मिंश्चिदथ काले तु मयि प्रीतो जनार्दनः ॥

किमिच्छसीति मां प्राह वरदानं समुद्यतः ।
एवमुक्ते मया तस्माद्याचितं वरमुत्तमम् ॥

येन चक्रेण मे दग्धा पुरी वाराणसी हरे ।
तद्यथा मद्वशे यायात्ममप्रेष्य च माधव ॥

तथा कुरु मयि प्रीतो नान्यं वरमहं वृणे ।
एवं विज्ञापितो देवः प्रहस्य मधुसूदनः ॥

हस्तेन मम हस्ताग्रं गृहीत्वेदमुवाच ह ।
कथं सूर्यं परित्यज्य प्रभाऽन्यस्य भविष्यति ॥

एवं श्री कौस्तुभं चक्रं गरुडश्शार्ङ्गमेव च ।
एवमादीनि वस्तूनि नित्यसिद्धानि शङ्कर ॥

नैतेषां जन्मविलयौ नान्यस्तेषामपाश्रयः ।
अशक्यमिदमत्यर्थं याचितं प्रमदाधिप ॥

इत्यादिना साक्षात्सुदर्शनादि लक्षणानां भगवदसाधारणत्वमेव दर्शितम् । चक्रादिलक्षणानां भगवदसाधारणत्वाज्जटाधरत्वादिलक्षणानां भगवदवतारविशेषसाधारणत्वाच्च महादेवकथाया असमञ्जसोक्तित्वमेव । यदप्युक्तं सर्वकारणत्वेनाभ्युपगते विष्णौ वर्णितं सर्वलक्षणोपपादनन्यायेनैवास्माभिस्तधारत्वेनाभ्युपगते महादेव एव सर्वलक्षणोपपादनसंभव इति । तदप्ययुक्तम् ।

नारायणेतरस्य सर्वकारणत्वासंभवस्य श्रुतिषु सुप्रसिद्धत्वात् भगवदसाधारण नारायणादि पदश्रुत्या देवताविशेषनिर्णयस्यात्र स्पष्टतरं संभवेन रुद्रे सर्वकारणत्व संभवासंभवविवाद परिहारस्यापि संप्रत्यत्यन्तमावश्यकत्वाभावाच्च ॥

तस्मान्नासौ महादेव इति सिद्धं भवति ।

अथ नाप्यसौ हरिहरावताररूपो देव । शङ्खचक्रादि भगवदसाधारणचिह्नानामनन्यथासिद्धेर्लिङ्गान्तराणा भगवत्साधारण्योपपादनेनान्यथासिद्धत्वात् । आविर्भावघट्टेषु श्रीवैकुण्ठात् इतस्साक्षान्नारायण एवात्रागत्याविर्भूत इति भगवदसाधारणनारायण विष्ण्वादि पदश्रुत्यैव नारायणताया निर्णीयमानत्वाच्च ॥

दिव्य सूरिगाथाविशेषेऽपि स्वस्वामिन श्रीमन्नारायणस्यैव द्विविधाकारो लक्षणतया भात इत्येवोक्तम् न तु दवनाद्वयात्मकोऽयं देव इत्यतो ततत्प्रामाण्यादस्य हरिहरावताररूपत्वमावेन समवदुक्तिर्कामित्यवधेयम् । एवमस्य देवस्य प्रादुर्भावसमये ब्रह्मरुद्रादिभिस्सर्वैस्स्वस्वस्थानस्यस्समागतै सर्मेचितत्वाभिधानस्य स्पष्टतया, रुद्ररूपत्वे तत्पितृभूत ब्रह्म सेवितत्व वर्णनमसगतम् । पुत्रस्य पितृवन्द्यत्वायोगात , रुद्रसेवितत्व वर्णनमप्यसगतम । स्वस्य स्वसेव्यत्वायोगात् । रुद्ररूपस्यास्यात्रैव सन्निधान स्थिते कैलासाख्यस्थानान्तरात् पार्थक्येन एतद्देवसेवनार्थमागमन पुनर्गमनयोर्वर्णनायोगाच्चेत्यपि वा यम ।

किंच हरिहरावताररूपत्व वदता वादिनामर्धनारीश्वरन्यायेनैकशरीराधिष्ठान दवनाद्वय त्वभिमत वक्तव्यम् । तच्च नयुज्यते । अप्राकृतेऽस्मिन् भगवतो वेंकटाचल एव आराध्यतया देवतान्तरावस्थानासभवस्य प्रागुदाहृतवचन सिद्धतया भगवच्छरीरे तदवस्थानासभवस्य किंपुनर्न्यायसिद्धत्वात् । शरीरस्यैकदेशे एकदेवतालक्षणाना अपरभागे देवतान्तर लक्षणानाच पार्थक्येनादर्शनेन अर्धनारीश्वरन्यायानवकाशात् वामनपुराणभागे भगवतोऽप्राकृते दिव्यवपुषि साक्षात्सम्पर्शयोग्यताया स्वस्मिन् असभवस्य तत एव सद्द्वारक सबन्ध सपादनप्रवृत्तेश्च महादेवेन स्वयमेव स्पष्टमभिहितत्वाच्च ।

यथोक्त वामनपुराणभागे चतुर्विंशाङ्कचिह्निते पञ्चमाध्याये सुदर्शनाशभूत कालचक्राभिमानि पुरुष स्वात्मानमुद्दिश्य तप कृतवन्तप्रति महादेवेन—

शुद्ध सत्वस्य तद्विष्णोः स्सर्वयज्ञस्य यपुन ।
साक्षात्स्रष्टुमहः मोतस्तमागुण समाश्रय ॥

वस्तव्यन्न मयाविष्णो दिव्यमङ्गलविग्रहे ।
त्वामेव तदह नित्य विष्णोर्नित्यानपायिनम् ॥

अनुप्रविश्य तद्देहेवसिष्यामि सुदर्शन । इति अप्राकृत दिव्यविमानेन अप्राकृत दिव्यवपुषा दिव्यैरप्राकृतै भूषणायुधैश्च भगवान् श्रिय पति स्वामिपुष्करिणीतारे पादुर्भूत इति च प्रकटतर निरूपित पुराणभागेषु । तस्मान्नात्र हरिहरावतार कथाकन्था ।कचिदप्यवकाश लब्धुमर्हति ।

यदप्युक्त स्कान्दपुराण प्रथमभागान्तर्गताष्टमाध्याये कतिपयश्लोकेषु श्रीनिवास महादेव शब्दाभ्यामस्यदेवस्य निर्देश अस्य हरिहरावताररूपत्वोत्तम्भक इति ।

तदप्यसाधु । तत्रत्यमहादेवशब्दस्य योगेन सर्वाधिकदेवतामात्रपरतया देवतान्तररूढशब्दरूपत्वाभावात् । अतएव तत्प्रकरण तत्स्थान एव कतिपयश्लोकेषु दर्शितरीत्या सर्वाधिकदेवतापरशब्दान्तरप्रयोगदर्शनाच्च । यथाक्त तस्मिन्नध्याये तस्मिन्नेवप्रकरणे

ये स्मरन्ति महादेव श्रीनिवास विमुक्तिदम् ।
कीर्तयन्त्यथवा विप्रा स्तमुक्ता पापपञ्जरात ॥

नारायण परदेव वेकटेश प्रयान्तिवा । इति
वेकटेश परदेव या नचिन्तयति क्षणम् ॥
अज्ञानी स च पापिस्यात्समूको बधिरस्तथा ॥ इति

वेकटेश परदेव येपश्यन्त्यर्चयन्ति वा ।
जन्म तेषा हि सफल ते कृतार्थाश्च नेतरे ॥

वेकटेशे परदेवे दृष्टे वा पूजितेऽपिवा ।
शभुना ब्रह्मणा किंवा शक्रेणाप्यखिलामरै ॥ इति

वेंकटाख्ये महापुण्ये सर्वपातकनाशने ।
श्रीनिवास परं देवं यः पश्यति सभक्तिकम् ॥
न तेन तुल्यतामेति चतुर्वेद्यपि भूतले । इति च ॥

अत्र महादेवशब्दस्थाने परदेवशब्द प्रयोगात् तत्समनार्थक एव महादेवशब्द इति स्पष्टम् ।

किं च । तत्प्रकरणे—

ब्रह्महत्यासहस्राणि सुरापानायुतानि च ।
दृष्टे नारायणे देवे विलयं यान्तिकृत्स्नशः ॥ इति ।

वेंकटाचलदेवेशं कीर्तयन्नर्चयन्नपि ।
अवश्यं विष्णुसायुज्यं लभते नात्र संशयः । इति ।

वेंकटेश्वरदेवेशं यः पूजयति भक्तितः ।
सकोटिकुलसंयुक्तः प्रयाति हरिमन्दिरम् ॥ इति च ॥

वेंकटेशदेवस्य नारायणतायाः तत्पूजकस्य विष्णुसायुज्यैकफलतायाश्च स्पष्टमेवाभिधानात् नासौ हरिहरावतारूपो देवः । तथासत्यकान्ततो विष्णुसायुज्यस्यैव फलतयाऽभिधानासागत्यात् अस्य देवस्य शंभुत्वे —'शंभुना ब्रह्मणा किंवा' इत्याद्यभिधानासागत्याच्च ।

यदपिचोक्तं 'अष्टमीन्दुकलाधार ललाटस्थोर्ध्वपुण्ड्रक, इति पाद्मपुराणभागस्थ सप्तविंशाङ्क चिह्नित चतुर्थाध्यायवचनेन हरिहरावताररूपत्वमस्यदेवस्योत्तम्यत इति ।

तदप्ययुक्तम् अष्टमीन्दुकलेव आधारः मूलं यस्य तत् अष्टमीन्दुकलाधारं तथाविधं ललाटस्थं ऊर्ध्वपुण्ड्रं यस्य सः । इति विगृहीतेन अष्टमीन्दुकलाधारललाटस्थोर्ध्वपुण्ड्रकशब्देन अर्धीकृतपूर्णेन्दुमण्डलाकारमूलभागतदुपर्यूर्ध्वनिस्सृतसुधारेखाद्वयाकार सान्तराल रेखाद्वयात्मकोर्ध्वपुण्ड्रविन्यासविशेषस्यैवाभिधीयमानतया अस्य वचनस्य चन्द्रशेखरत्वोर्ध्वपुण्ड्रधरत्वरूपहरिहर लाञ्छन प्रतिपादनपरत्वाभावात् ॥

एकोनत्रिंशाङ्कचिह्नितततपुराणषष्ठाध्याये — ललाटपट्टघटितवेणुपत्रोर्ध्व-पुण्ड्रक इति वचने श्रीश्वेतवराहभगवत ऊर्ध्वपुण्ड्रविन्यास विशेषाभि-धानवादस्यापि वचनस्य श्रीनिवासभगवदूर्ध्वपुण्ड्रविन्यासविशेषप्रदर्शनपरताया एवस्वारस्यिकत्वाच्च ॥ समूल सान्तरालरेखाद्वितयात्मकत्वच ऊर्ध्वपुण्ड्रस्य शास्त्रसिद्धम् ।

यथोक्तं कात्यायनीय श्वेतमृदूर्ध्वपुण्ड्रोपनिषदि—

एकाङ्गुल फालतल ऊर्ध्वस्यमूलम् । तदुत्पन्ने द्वे शाखे । तथैव-मध्येऽवकाशोऽङ्गुलादन्यून । स श्रीप्रतिष्ठायै । श्रीर्हरिद्रा । यत श्रीर्मभव-तीति । उक्तच पाद्मोत्तरखण्डे एकत्रिंशाङ्कचिह्निते तृतीयाध्याये ।

आरभ्य नासिकामूल ललाटान्त लिखेन्मृदा ।
समारभ्य भ्रुवोर्मध्य मन्तराल प्रकल्पयेत ॥

अन्तराळ द्व्यङ्गुलस्यात्पार्श्वाविङ्गुलिमात्रको । इति ।

भारद्वाजसंहितायाचोक्तम् —

आचम्य धारयेत्पुण्ड्रान् पूर्ववच्छ्रधयामृदा ।
आरभ्य नासिकामूल माकेशान्त प्रकल्पयेत ॥
नासिकायास्त्रिभागस्तु नासिकामूलमिष्यते ।
हारिद्रेणतु चूर्णेन कुङ्कुमेन सुगन्धिना ॥

ऊर्ध्वपुण्ड्रस्य मध्येतु लक्ष्मीस्थान प्रकल्पयेत् ॥ इति

वैखानसागमेऽप्युक्तम्—

नासिकामूलमारभ्य रेखाद्वितय मद्युतम् ।
धारयेदूर्ध्वपुण्ड्रतु हरे फालतले शुभे ॥ इति ।

एवमन्यदप्यूर्ध्वपुण्ड्रविन्यासविशेषप्रदर्शनपर प्रमाणजात द्रष्टव्यम् । अत्र रेखाद्वितयात्मकोर्ध्वपुण्ड्रमूलस्य नासिकामूलगतस्य अर्धीकृतपूर्णेन्दु-मण्डल समानाकारतया भगवतो ललाटस्थमूर्ध्वपुण्ड्रमष्टमीन्दुकलातुल्यमूल-मित्यभिप्रायेणैवाष्टमीन्दुकलाधारललाटस्थोर्ध्वपुण्ड्रक इत्युक्तम् ।

यद्वा अष्टमीन्दुकलाकारललाटस्थोर्ध्वपुण्ड्रकइत्येवात्रपाठ । अष्टमीन्दु-कलाकारेत्येतच्च ललाटविशेषणमितिबोध्यम् ।

" अष्टमीन्दुकलाकारे ललाटे दर्पणस्फुटे ।
ऊर्ध्वपुण्ड्रद्धाराथ श्रीनिवासस्सतागति ॥

समूलरेखाद्वितय श्वेतमृत्तिकया स्वयम् ॥ इति भविष्योत्तरपुराणैका-दशाध्याय वचनैककण्ठ्यात । पूर्वपाठस्यैव प्रामाणिकत्वे च यथोक्तरीत्यैव अर्थ सुसगतोबोद्धव्य ।

एव शकरस्य शिरसि चन्द्रकलायास्सद्भावेऽपि ललाटे तदभावात् । अष्टमीन्दुकलाधार ललाटस्थोर्ध्वपुण्ड्रक इत्यत्र ललाटे चन्द्रकलाया आधा-रत्वप्रतिपादनपरत्ववर्णन वादिनामसगतमेव ।

तस्मान्नकथचिदप्यत्र हरिहरावताररूपस्व कथा सम्यग्लग्ना भवति । इद पुनरत्रावधेयम्—

भगवतोहि नारायणस्य मत्स्य कूर्मवराहादिरूपा नानाविधवर्णाकारा अवतारा सहस्रश सन्ति । तेषुच विष्णुरेवायमित्थमवतीर्ण इति तत्रतत्र प्रयुक्त भगवदसाधारण नारायण विष्ण्वादिपदश्रुत्यैव विष्णुरूपता निर्णेया । नतु लिङ्गै । लिङ्गपर्यालोचनेनच मत्स्यत्व कूर्मत्व वराहत्वादिरूपजात्या प्राकृत मत्स्यादिमात्ररूपतैव सिध्येत । तत्र यथा लिङ्गात श्रुतिप्राबल्येन प्राकृत-मत्स्यादिमात्ररूपत्वमपनुद्य विष्णुत्वमवधारयन्ति न्यायविद , तथा श्रीवैकु-ण्ठात् श्रीमन्नारायणएवहि इत्थमतवेषशालि श्रीनिवाससज्ञ श्रीवेकटेश-रूपेणावतीर्ण इति श्रूयमाण भगवदसाधारण नारायणपदादिश्रुत्या प्रबलया जटाधरत्व नागभूषणत्वादि दुर्बल लिङ्गाधीन देवतान्तरत्वधियमपनुद्य नारा-यणत्वमेव निर्णेतु शक्यम् । नहि खल्वस्मदयमीदृशवेषशाल्यत्रागत इति-स्फुटमभिधीयमाने वेषमात्रेण तस्मादन्यत्व तस्य निश्चेतु शक्यम् ।

लोकेऽपिहि रामकृष्णसीतासत्यभामादि भूमिकाभेदधारिणि रङ्गावतीर्णे शैलूषे अमुकोऽत्र ईदृशवेषशाली समागत इति स्फुटमवगते वेषमात्रेण न रामकृष्णादित्वमनुन्मत्त कश्चित्प्रत्येति ।

* *

नागभूषणत्वादिकं विष्णोरवतारान्तरेषु न क्वचित् दृष्टमितिचेत् मत्स्यत्वकूर्मत्व वराहत्वादिकमपि न तत्तदवतारभिन्नावतारेषु क्वचित्प्रसिद्धमिति तुल्यम् । किंच, श्रीकृष्णावतारे अवतारान्तरव्यावृत्त मयूरपिञ्छभूषणत्वदर्शनमात्रेण मयूरवाहन एवायमिति नैते वादिनोऽपि विवदन्ते । अपिच । नागभूषणत्वमिह दृश्यमान न भगवदवतारान्तर व्यावृत्त, विवादकथाकन्थागन्धविधुरे हस्तिगिरिनाथ श्रीवरदराजभगवत्यपि तस्य दृश्यमानत्वात् । तस्य देवस्यानन्ताराधितत्वमेव तदाकारभूषणधारित्वनिमित्तमितिचेत् ततोऽप्यधिकतर निमित्तमिहाप्यस्तीत्यभिहितमेव प्राक् ॥

**तस्मादसौ वेङ्कटेशो न देवतान्तरम्** । श्रुतिलिङ्गवाक्य प्रकरणस्थानसमाख्याना समवाय परदौर्बल्यपर्यायविप्रकर्षादितिहि पूर्वकाण्डे तत्त्वनिर्धारणप्रवृत्तेषु षट्सु प्रमाणेषु श्रुते सकलेतरप्राबल्यमभिहितम् ।

अत्र निर्दिष्टानि षड्विधान्यपिच प्रमाणानि श्रीवेङ्कटेश श्रीमन्नारायणमेवेह प्रतिपादयन्ति ।

श्रुतिस्तावत् अवतारवट्टेषु भगवदसाधारण नारायण विष्ण्वादि पदरूपासुप्रसिद्धा । अवतारघट्टेषु भगवद्वाचकतया भगवदसाधारण नारायण विष्ण्वादि शब्दा बहुश प्रयुज्यमानास्तत्र तत्र द्रष्टव्या ।

शङ्खचक्रादिदिव्यायुधधरत्व लक्ष्मीसमालिङ्गितवक्षस्कत्व गरुडाधिष्ठितविमानारूढत्व ब्रह्मरुद्रादिसकलेतरवन्द्यमानचरणनलिनत्वादीनिच देवतान्तरव्यावृत्तानि भगवदसाधारणानि लिङ्गानि तत्र तत्र प्रतिपाद्यन्ते ।

लक्ष्मीपतित्वादि भगवदसाधारणधर्मप्रतिपादकानि श्रिय पतिरित्येवमादीनि अनन्तानि वाक्यानि च तत्र तत्र द्रष्टव्यानि ।

भविष्योत्तरपुराणे श्रीवाराहपुराण द्वितीयभागेच यशोदाया श्रीकृष्ण भगवत परिणयमङ्गलदर्शनसुखकाङ्क्षिण्या तदवतारे तदलाभेन अवतारान्तरे तत्सुख दास्यामीति भगवता दत्तवराया पुन कलौ वकुलमालिकारूपेण श्रीवेंकटाद्रावतीर्णाया पूर्वप्रतिज्ञात सुखदानार्थमवश्यकर्तव्यावतारस्य श्रीकृष्ण-

भगवतस्स्थाने श्रीनिवासनामा श्रीवेंकटेशोऽवतीर्य तन्मुखेनैव आकाशराजपुत्रीं परिणय कृत्वा तस्यैतादृशमुख प्रादिशदिति प्रतिपादनात् ।

पूर्वं श्रीरामावतारे स्वप्रतिनिधितया लङ्कायां घोरतररावण भवन-वासस्वशमनुभूतवत्या वेदवतीनाम्न्या स्वभार्या परिणय कर्तव्यतया रावणवधानन्तराग्निप्रवेशकाले प्रार्थितवत्या सीतादेव्या मनोरथानुगुण्येन कलौ तस्या परिणयं करिष्यामीति भगवता श्रीरामेण प्रतिज्ञाकरणात् । कलावा-काशराजपुत्रीरूपेण जाताया पद्मावतीनाम्न्या वेदवत्या परिणयार्थमवश्य-कर्तव्यावतारस्य श्रीरामभगवत स्थाने श्रीनिवाससज्ञ श्रीवेंकटेशोऽवतीर्य पद्मावती परिजग्राहेतिप्रतिपादनाच्च, श्रीवेंकटेश श्रीमहाविष्णुरेवेत्यत्रस्थान-प्रमाणमपि सिद्ध भवति । तत्तत्कार्यकरण प्रतिज्ञाकर्तु तदनुगुण कार्यकर्तुश्च एकताया आवश्यकत्वात् ॥

श्रीरामकृष्णयोर्भगवदवतारत्व हि निर्विवादम् । तत्तत्पुराणाद्यन्तभागेषु विष्णुक्षेत्रप्रस्तावोपसंहारयोरेव दर्शनात् प्रकरणप्रमाणमपि सिद्ध भवति । श्रीनिवास समाख्याबलाच्च अस्य विष्णुत्व सिध्यतीति समाख्यारूप प्रमाण-मपि दर्शित भवति ॥ श्रीनिवास समाख्याचास्य देवस्य ब्राह्मपुराणे सप्त-माध्याये,

केन नाम्नाप्रसिद्धोऽसौ भगवान् हरिरीश्वर ।
किं लक्षणश्चतत्रास्ते तन्मे ब्रूहितपोधन ! ॥

दूर्वासा —

"श्रीनिवासाख्यया देव शङ्खचक्रधरो विभु ।" इत्यादिना समाख्यालक्षण प्रतिपादकेन ग्रन्थेन प्रश्नोत्तरपूर्वक प्रतिपादिता द्रष्टव्या ॥

तस्मात् इत्थ षड्भि प्रमाणै प्रतिपन्नदुरपह्नवनारायणभावे दुरारोपदेवतान्तरभावे श्रीनिवाससज्ञे श्रीवेंकटगिरिनाथे कतिपय लिङ्गाभासै देवतान्तरभाव बलादारोपयता वादिना मनोरथो नकथचिदपि सेत्स्यतीति

सम्यगवधारणीयम् । नागभूषणत्वादि देवतान्तरचिह्नदर्शनेन देवतान्तरत्वशङ्कायोग्यतासद्भावमात्रेण प्रायश शङ्कन्ते मुग्धा ॥

विदग्धाना तु नकिंचिदत्र देवतान्तरशङ्कापदमस्ति । तदिद सर्व 'भोगीशकङ्कणश्शङ्क्यो निश्शङ्कश्शङ्किताखिल' इति श्रीवेंकटेश सहस्रनाम पाठगत नामचतुष्टय पर्यालोचनेनैव सुगममिति नात्र विशेषतो निरूपणीयमस्ति इति । तस्मात् वादिवादानुरोधेन नात्रदेवतान्तरसबन्धगन्ध शङ्का कथा

॥ प ॥ इत्थ यतीशेन विबोध्यमानो
विमिष्मिये यादव भूमिपाल ।
निरूपण तस्य बुधावलीना
शिर प्रकम्प जनयन्निशम्य ॥

कल्पान्तवातूल रयास्थितेन
मेने सतूलेन समानलीलम् ।
उत्क्षिप्य विक्षिप्तमनीव दूरा-
द्यतीन्द्रवाण्या लघुशैववादम् ।

इत्थ यतीशान सयुक्तिवाण्या
निरस्त सजातसमस्तशङ्क ।
शैवान् बभाषे सतदा नरेन्द्र-
उत्खातदष्ट्रानिव पन्नगेन्द्रान् ॥

**यादवराजः**

भो शैवा भवता वाद कृत्स्नोऽपि रामानुजमुनिना सहस्रधा शकलीकृत एवासीत् । अहो अहो रामानुजमुनेर्वाग्मित्व वाचस्पतिमप्यतिशेते । इत पर कि ब्रुवन्ति भवन्त ।

॥ प ॥ इतिकर्तव्यतामुग्धाश्शैवा इत्थमुदीरिता. ।
यादव क्षोणिपाल तमूचु कालोचित वच ॥

**शैवाः** ---

भो भो यादवराज नूनमेष रामानुजमुनि मदसि वादिवाग्बन्धन-विद्याविशारद किमपि मन्त्र प्रयोजयन् मूकीकरोत्यस्मान् । किंच सप्रति तदीयवादस्य समुचितमुत्तर दातुमक्षमाणामपि प्राचीनवृद्धपरम्पराप्रवाददृढतर-विस्रब्धहृदयानामस्माकमन्तरात्मा रामानुजमुनिवादे नकिंचिदपि विश्व सित्यन्तरेणदेवताभिमतिप्रदर्शनम् । यदिपुनरेष रामानुजमुनि स्वकीयवादे देवताभिमति प्रदर्शयति तदैव वयमेतदीय वाद प्रामाणिकमङ्गीकरिष्यामो नान्यथा । भवास्तु देशाधिपतिर्बलवान् राजा किंवाकर्तु [ न ] शक्यति । भवति बलात्कारेण रामानुजमुन्यभिमत निर्वर्तयति मन्दभाग्या अशक्ता वयम् । 'राजाहरति सर्वस्व कातत्र परिदेवना' इतिन्यायमनुसदधाना तूष्णीमुपरता भविष्याम ॥

॥ ५ ॥ इत्थ शैवैरुक्तो यादवराजस्तथाब्रवीच्छैवान् ।
केवलमूर्खान् मत्वा निज कपिमुष्टिर्ह्यनिच्छतो हातुम् ॥

**यादवराजः—**

भो शैवा इयन्त काल यथाशक्ति प्रतिवचनदान कुर्वाणा भवन्तोऽद्य अनन्यगतयो नून मन्त्रवादकथामहाचूर्णेन मा मोहयितुमुद्यच्छन्ति । प्राक् प्रमाणकथा सस्पर्शलेश विधुरेण श्रीवेंकटेशे देवतान्तरत्ववादेन केवललि-ङ्गाभासमूलेन अपूर्वपरिकल्पितेन मा मोहितवन्त सप्रति तदनवकाशेन प्रस्थानान्तरेण वञ्चयितुमुद्यच्छन्तो भवन्त समुचित दण्ड ध्रुवमनुभविष्य-न्ति । तदद्य सावधान स्थीयताम् । इत्थ शैवान्निर्भर्त्स्य स यादवराज महा-पुरुषोऽयमतिमानुषचेष्टितो योगीश्वरो रामानुजमुनि शैवोक्तरीत्या स्ववादे देवताभिमतिमपि दर्शयितु शक्नुयादेव । तदेन चोदयामि, यथाच आगो-पालाङ्गन आचपण्डितात् सर्वेऽपि जना सप्रत्यय लभेरन् तथाकर्तुमित्यनु-सदधान तमेव रामानुजमुनि सविनय मवादीत् ॥

भो रामानुजमुने भवता प्रतिपक्ष निरसनपूर्वक स्वकीयपक्ष सम्य-गेव समर्थित । सुदूरोच्चाटिताच शैवावेशिता मामकीनदेवतान्तरशङ्कापि-

शाश्चिका मदन्तरङ्गादपुनरावृत्ति ॥ श्रीवेंकटेश्वरे देवतान्तरत्ववादं प्रमाणवैदेशिकइति, महाविष्णुत्व वादएव प्रामाणिक इति च शास्त्रैर्न्यायैश्च भवता दृढतर लम्भितविस्रम्भोऽहमस्मि । भवदभिमतानुरोधेन च सर्वं कार्यं निर्वर्तयामि ।

परतु महापुरुष अतिमानुषचेष्टितो भवान् पण्डितपामरसाधारण्येनापि देवताभिमतिप्रदर्शनसूचक सुतृप्तिकर समाधानोपाय कर्तु शक्ष्यति चेत् तथापि कर्तु प्रार्थयामि । नैतावता भवदभिमत न निवर्तयामीति चिन्तनीयम् ॥

तथा सति वादिन स्वाङ्गीकारेणैव मु:र निरस्ता स्युरिति तु प्रार्थयामीति विज्ञापयामास श्रीरामानुजमुनि यादवराज ॥

इत्थमभ्यर्थितस्स रामानुजमुनि अहो बहुलोपन्यासेनाप्यतृप्त इवभाति राजा । तत इदानीमिद कर्तव्यम् । ब्रह्माण्डपुराणैकादशाध्याये कलौ विमानादीनामिव शङ्खचक्रादि दिव्यायुधानामपि भक्तकल्पितानां स्वीकरणस्य प्रागेव प्रतिज्ञातत्वात् । अस्मत्परिकल्पित समर्पित दिव्यायुधानामस्वीकारनिर्बन्धाभावाच्च प्रसह्यवा गंप्रा॰ये सम्प्रति प्रसक्तदेवतान्तरतापत्तिलक्षणमहानर्थप्रसङ्ग परिहाराय शङ्खचक्रे भगवन्त धारयिष्यामि । आश्रितवात्सल्यजलधि भक्तपराधीनो भगवान् अस्मत्प्रार्थनया अवश्यमस्मत्समर्पिते शङ्खचक्रे स्वयमेव स्वीकुर्यादेव । तदिह शङ्खचक्रे निर्माप्य समर्पयाम । तद्धारणमेव देवताभिमतिसूचक सर्वसम्प्रत्ययकर प्रदर्शयामीत्यनुसदधान, भोराजन्, नितान्तप्रत्ययकर ममेद वचन सावधानमाकर्ण्यताम् । अह पुनरेनदेव श्रीमहाविष्णु ब्रवीमि । एतेच शैवा देवतान्तर ब्रुवन्ति खलु । अह भगवदसाधारणचिह्नभूत श्रीसुदर्शनपाञ्चजन्यादि दिव्यायुधानि निर्माप्य भगवत्सन्निधौ स्थापयामि । तेच देवतान्तर चिह्नभूत पाशाङ्कुशाद्यायुधानि निर्माप्य स्थापयन्तु । यानि पुनरायुधानि सदेवो गृहीत्वा धारयति, तत्तदायुधलाञ्छनोदेवएवायमिति निश्चेतव्यमिति यादवराजमाबभाषे । तत स यादवराजोऽपि

तद्वचनमाकर्ण्य मनुष्टस्सन् यद्येव भविष्यति तर्हि न कस्यचित् कश्चिदाक्षेप । तस्मात् तथैव कुर्वन्तु द्रुतमुभयेऽपिवादिन इति सबभाषे ॥ ततश्च उभयेऽपि-वादिन स्वस्वदेवासाधारणचिह्नभूतान्यायुधानि निर्माप्य कस्मिश्चिद्दिवसे राज्ञा सह श्रीवेंकटाचलमारुह्य रात्रौ दिव्यालयगर्भगृहे भगवतस्सनिधौ तानि निक्षिप्य कवाटबन्धन कृत्वा राजकीयमुद्राच कारयित्वा प्रभातपर्यन्त दिव्यालय परित सावधान जागरूकाएव सञ्चरन्तो विजयाय स्व स्व देव सन्ततमनुचिन्तयन्त एवावनस्थिरे ।

भगवान् रामानुजमुनिरपि स्वयोगमहिम्ना भगवन्त श्रीनिवासमुपसृत्य सम्यक् साक्षात्कृत्य भगवन् भवत्कृतप्राक्तनप्रतिज्ञानुरोधेन भगवदसाधारण-शङ्खचक्रादि दिव्यायुधानि धृत्वा अस्मान् सरक्षेति सप्रार्थयन् शङ्खचक्रादि दिव्यायुधधारण मङ्गीकारयामास । तत प्रभाते यादवराज निर्वर्तिताह्निक तादृशैरुभयैर्वादिभिस्सह भगवन्मन्दिर गत्वा कवाटमवघाट्य अन्त प्रविश्य भगवन्त श्रीवेंकटनाथ भगवद्रामानुजमुनिभक्तिपाशवशवद श्रीसुदर्शनपाञ्च-जन्यादि दिव्यायुधान्येव बिभ्राण पाशाङ्कुशाद्यायुधानि दूरतो निरस्तवन्त च निरीक्ष्य विस्मयमहार्णवनिमग्नमानस श्रीरामानुजमुनौ महतीं प्रतिपत्ति-माश्रित्य तदीय नियमनेन स्वत एव भग्नदर्पान् शैवजनान् असत्यार्थवादिन-अपराधानुगुण निगृह्य निजराष्ट्रान्निष्काम्य स्वय श्रीरामानुजमुनिसंनिधौ भगवतस्समाश्रयणेन लब्धसत्ताकस्सन् तदीयदिव्यचरणनलिनयुगलैकशरण कृतार्थो बभूव ।

तदनु श्रीविष्णुतत्त्वप्रतिष्ठापनाचार्य सकलदेशविख्यातकीर्ति स भगवान् रामानुजमुनि श्रीवेंकटाचले श्रीस्वामिपुष्करिणीदक्षिणतीरे विराज-मानो देव श्रिय पति श्रीवैकुण्ठनाथ श्रीमहाविष्णुरेव नतु देवतान्तर, मध्ये कचित्काल शैवजनैरर्थकामप्रतिष्ठालोलुपै निजप्रतारणचातुर्येण राजान व्यामोह्य अय देवो देवतान्तर शङ्काकलङ्कमासादित इति इममर्थ सकल-देशविदितं प्रख्याप्य श्रीवैखानसागमोक्तप्रकारेणैव भगवत श्रीनिववासस्य महासम्प्रोक्षण कारयित्वा यथापूर्वमेव नित्याराधन निर्वर्तयामास ।

किंच पूर्वसिद्धमेव भगवतः श्रीनिवासस्य श्रीमदानन्दनिलयदिव्यविमानं प्रशिथिलायमानं पुनर्नवीकृत्य तस्मिन् श्रीवैखानसशास्त्रोक्तरीत्या चतसृषु दिक्षु वराह नारसिंहवैकुण्ठनाथ विमानाधिदैवतानि प्रतिष्ठाप्य विष्णुपरिवारान् शेषशेषाशन गरुडद्वारपालकादींश्च तेषु तेषु स्थानेषु संस्थाप्य भगवतः श्रीनिवासस्य निरवधिक नित्यैश्वर्य समृद्धिसिद्ध्यै श्रीमति वक्षसि श्रीमतीं देवीं 'द्विभुजाव्यूह लक्ष्मीस्याद्बद्धपद्मासनप्रिया । श्रीनिवासाङ्कमध्यस्था सुतरां केशवप्रिया' इति वराहपुराणप्रथमभागान्तर्गतैकोनचत्वारिंशाङ्कचिह्नित सप्तमाध्यायोक्त द्विभुजव्यूहलक्ष्मीरूपिणीं —

वरपद्मासनं सुस्था विधाय कमलालयाम् ।
पद्मावतीं विशालाक्षीं भगवानात्मवक्षसि ॥

इति भविष्योत्तरपुराण त्रयोदशाध्यायान्तवचनेन प्रागपि इत्थंभूततया अवगम्यमानां शुक्रवारोत्तरफल्गुनीनक्षत्रयुक्तायां शुक्लपक्षद्वादश्यां रत्नमालिकायोगे कनकमयकण्ठिकायां प्रतिष्ठापयामास ।

इत्थं श्रीवेंकटाचलक्षेत्रं सकलपृथिवीतलवर्ति श्रीविष्णुक्षेत्रमालानायकरत्नभूतं मध्ये राजप्रतारणपरायणैः शैवजनैः कुहनया समाक्रम्य व्याकुलीकृतं कथंचित्तदीयवैयाकुलीमहापद्विमुक्तं कृत्वा वैष्णववशंवदीकृत्य निजचरणनलिनयुगलैकशरणं देशाधिपतिं तं च यादवराजं सम्यक् तत्त्वार्थबोधनैरनुशिक्षय्य स्तेनच श्रीनिवासं भगवतस्तत्तत्कालं समुचितानुपचारान् यथार्हं कारयन् स भगवान् रामानुजमुनिः श्रीवेंकटाचलोपत्यकायां श्रीपदनगर्यां कंचित्कालमुवास ॥

**इत्यनन्तार्यगुम्भितायां श्रीवेंकटाचलेतिहासमालायां श्रीवेंकटनाथभगवतो देवतान्तरत्ववादनिरसनं नाम तृतीयस्तबकः**

---

## अथ चतुर्थस्तबकः

तदानी तत्र निवसन् रामानुजमुनि श्रीवेंकटनाथस्य अनुदिनमभिषेक क्रियमाणमालक्ष्य इत्थ नित्याभिषेके भगवद्दिव्यमङ्गलविग्रहस्य समुचिता-स्सर्वोपचारा सपूर्णा यथावन्निर्वर्तन्ते । तस्मात् तदातदा सकृत् सकृदेव देवस्य विशेषाभिषेको निर्वर्तयितुमुचित । तत्रच,

सहलक्ष्म्याभिषेकस्तु वासरे भार्गवे हरे ।
सान्निध्यकारी सतत सर्वसपत्प्रदायक ॥

इति श्रीवैखानसशास्त्रानन्दसहितावचनेन प्रतिभार्गववासरमभिषे-कस्य विशेषाभ्युदयहेतुत्वावगमात । भविष्योत्तरपुराणचतुर्दशाध्याये कूर्म-द्विजवृत्तान्ते,

पूर्वदेवगुरोर्वारे सप्राप्तस्तु गतेदिने ।
तद्दिने वेङ्कटेशस्य प्रसक्तमभिषचनम् ॥

तद्दर्शनार्थ मे कन्या सर्वा जग्मुर्महीगुर ।
ताभि समेता नेभार्या पुत्रीपुत्रसमन्विता ॥

जगाम वेङ्कट शैल देवदर्शनकारणात् । इति तोण्डमान्नृपेण कूर्मद्विजप्रत्यभिधानदर्शनेन पूर्वमपि श्रीनिवासस्य भार्गववासराभिषेक नैयत्यस्थितेरवगमाच्च इत प्रभृति प्रतिभार्गववासरमेव श्रीनिवासस्य लक्ष्म्यासह विशेषाभिषेको नियमतो निर्वर्तनीय इति व्यवस्थापयामास ।

सभगवान् रामानुजमुनि पुनरित्थमपि व्यवस्थापयामास ।

'अष्टमीन्दुकलाधार ललाटस्थोर्ध्वपुण्ड्रक' इति पाद्मपुराणभागस्थ सप्तविंशाङ्कचिह्नित चतुर्थाध्यायवचनेन भविष्योत्तरपुराण सप्तमाध्याये ।

आदर्शालोकिते वक्त्रे धृत्वा शुभ्राच मृत्तिकाम् ।
तन्मध्ये कुङ्कुमेनापि तिलक सुमनोहरम् ॥

इति भगवत श्वेतमृत्तिकोर्ध्वपुण्ड्रधारण प्रतिपादनपरवचनेन —

आदर्श मृत्तिका शुभ्रा तथा कुङ्कुमभाजनम् ।
स्वर्णनिर्मितवस्त्रेण बध्वातु कटिमध्यत ॥

इति गन्तव्यप्रदेशेऽप्यूर्ध्वपुण्ड्रधारणार्थद्रव्यनयनपरेण च वचनेन ।

एव तत्रैव पुराणे एकादशाध्याये—

अष्टमीन्दुकलाकारे ललाटे दर्पणस्फुटे ।
ऊर्ध्वपुण्ड दधाराथ श्रीनिवासस्सतागति ॥
समूलरेखाद्वितय श्वेतमृत्तिकया स्वयम् ।
तदाह कमला राजन् वकुलालोकमातरम् ॥
रेखा रचय कल्याणी ललाटे कुङ्कुमेनतु ।
एवमुक्ता दवमात्रा रमा कुङ्कुमरेखिकाम् ॥

समूलयोरूर्ध्वपुण्ड्र रेखयोरन्तरेऽलिखत । इति वचनैश्च श्रीनिवास-भगवत ऊर्ध्वपुण्ड्रधारिताया अवगमन तद्धारणे शैवजनाना स्वाभिमतदेवता-दृष्टिनिरासमभवनच इयन्तकाल देवतान्तरशङ्काकलङ्कितस्य श्रीश्रीनिवास-भगवता दर्शनदशायामेव श्रीविष्णुताप्रत्यभिज्ञापकमूर्ध्वपुण्ड्र धारयितव्यम् । तच्चोर्ध्वपुण्ड्र नासिकामूलाभिव्याप्तार्धेन्दुमण्डलाकारमूल तदुपर्याकेशान्तोर्ध्व-निस्सृत सुधाधाराद्वयाकार सान्तरालविपुलतर धवलरेखाद्वितययुत विशुद्ध-तरघनतरसुगन्धि घनसारचूर्णमय धारयितव्यम् । “ अष्टमीन्दुकलाधार ललाटस्थोर्ध्वपुण्ड्रक ” इति प्रागुदाहृत पाद्मपुराणवचने आधारशब्दार्थस्य ऊर्ध्व-पुण्ड्रमूलस्य अष्टमीन्दुकलातुल्यत्वाभिधानात् अष्टमीन्दुकलाया अर्धीकृत-सपूर्णपूर्णिमाचन्द्र समानाकारत्वाच्च भ्रूमध्यादधस्तान्नासिकामूले अर्धेन्दुमण्ड-लाकार निरन्तराल ऊर्ध्वपुण्ड्रस्य मूल कल्पनीयम् । तदुपर्याकेशान्तधार्यो-र्ध्वपुण्ड्रभागस्य सान्तराल रेखाद्वितयात्मकत्वाभिधानात् भ्रूमध्यप्रभृति सान्त-राल नासिकामूलधृतमूलभागादूर्ध्वनिस्सृत रेखाद्वयच कल्पनीयम् ।

प्रागुदाहृताया " एकाङ्गुल फालतल ऊर्ध्वस्य मूल । तदुत्पन्ने द्वेशाखे । तथैवमध्ये अवकाशोऽङ्गुलादन्यून" इत्यादिरूपाया कात्यायनीयश्वेतमृदूर्ध्व-पुण्ड्रोपनिषद्यपि मूलस्य द्विरेखात्मकत्वानभिधानात् मूलादुपरितनोर्ध्वपुण्ड्र भाग-स्यैव शाखाद्वयात्मकताया अङ्गुलान्यूनशाखाद्वयमध्यान्तरालतायाश्च विधा-नाच्च मूल निरन्तरालम् । तदुपरितनभागएव सान्तराल इति यथोक्ताश एव प्रतिपन्नो भवति ।

एव—

आरभ्य नासिकामूल ललाटान्त लिखेन्मृदम् ।
समारभ्य भ्रुवोर्मध्यमन्तराल प्रकल्पयेत् ॥

अन्तराल द्व्यङ्गुलस्यात्पार्श्वावङ्गुलिमात्रको ॥ इति पूर्वोदाहृत पाद्मोत्तरखण्डैकत्रिशाङ्कचिह्नित तृतीयाध्यायवचनेऽपि नासिकामूलमारभ्य ललाटान्तपर्यन्त ऊर्ध्वपुण्ड्रस्य धार्यताया तत्र भ्रूमध्यप्रभृत्येव अन्तरालस्य कल्पनीयतायाश्चाभिधानात् ॥ नासिकामूलमारभ्य भ्रूमध्यपर्यन्तं धृतमूर्ध्व-पुण्ड्रस्य मूल निरन्तरालम् । तदुपरितनोर्ध्वपुण्ड्रभागएव सान्तरालइति यथो-क्ताशएव सुस्पष्टोऽवगम्यते ।

प्रागुदाहृत कात्यायनीय श्वेतमृदूर्ध्वपुण्ड्रोपनिषदि ' एकाङ्गुल फालतल ऊर्ध्वस्यमूल ' मित्यत्रफालतलशब्द फालाधःप्रदेशभूत नासि-कामूलपर । तलशब्दस्य अधःप्रदेशपरत्वात् वचनान्तरैकण्ठ्याच्च ।

नासिकामूलमारभ्य धार्यत्व सान्तरालद्विरेखात्मकत्वच ऊर्ध्वपुण्ड्रस्य सर्वत प्रसिद्धम् ।

अतएवोक्त भारद्वाजसहिताया—

आचम्य धारयेत्पुण्ड्रान् पूर्ववच्छुभ्रयामृदा ।
आरभ्य नासिकामूलमाकेशान्त प्रकल्पयेत् ॥

नासिकायास्त्रिभागस्तु नासिकामूलमिष्यते ।
हारिद्रेणतु चूर्णेन कुङ्कुमेन सुगन्धिना ॥

ऊर्ध्वपुण्ड्रस्य मध्येतु लक्ष्मीस्थान प्रकल्पयेत् । इति

वैखानसागमेप्युक्तम्-—

नासिकामूलमारभ्य रेखाद्वितयसयुतम् ।
धारयेदूर्ध्वपुण्ड्रन्तु हरे फालतले शुभे ॥ इति ।

पराशरसहितायामप्यूर्ध्वपुण्ड्रविधानप्रकरणे उक्तम्—

नासादौ द्व्यङ्गुल पाद मध्य सार्धाङ्गुल भवेत् ।
पार्श्वावङ्गुलमात्रौतु सुस्पष्ट धारयेत् द्विज ॥ इति

एव जातीयमन्यदपि प्रमाणजात तत्रतत्र स्थितमुदाहार्यम् । अत्र सर्वत्रोर्ध्वपुण्ड्रस्य नासिकामूलमारभ्य धार्यत्व सान्तरालरेखाद्वयात्मकत्व चैकरूपमुक्तम् ।

तत्र नासिकामूलवृत्त ऊर्ध्वपुण्ड्रस्यमूलमच्छिद्रम् । तदुपरितनभागएव सान्तरालरेखाद्वितयात्मक इत्येव सर्वत्राभिप्रेत बोध्यम् । दर्शितकात्यायनीयश्रुति पाद्मोत्तरखण्डपराशरसहितावचनैकण्ठ्यात् । ऊर्ध्वपुण्ड्रमूलदैर्घ्यंतु एकाङ्गुलादन्यूनमङ्गुलद्वयादनधिक नासिकामूलमभिव्याप्य बोध्यम् ।

दर्शितकात्यायनीयश्रुति पराशरसहितावचन पाद्मोत्तरखण्डवचनानामैकार्थ्यात् । सर्वेषा वस्तूना मूलमध्यपर्यन्तात्मना विभागमभिमन्धाय दर्शितभारद्वाजसहिताया ‘ नासिकायास्त्रिभागस्तु नासिकामूलमिष्यते इति नासिकातृतीयाशरूपत्व नासिकामूलस्य अभिदधता भरद्वाजेन नासिकाया त्रिधाविभक्ताया अधोभागद्वयमुत्सृज्य तदुपरिप्रभृत्यूर्ध्वपुण्ड्रस्य धार्यत्वमभिहितम् । त्रिभागशब्दश्च त्रिषुभाग त्रिभागइति विगृहीत त्रिष्वन्यतम भागमाचष्टे । तथाच ऊर्ध्वपुण्ड्रस्य दैर्घ्यवैशाल्यवन्मूलदैर्घ्यमपि तत्तदवयवसन्निवेशानुगुण्येन चारुतातिशयानुगुण्येनच तत्तत्स्थलानुगुण ललाटेतु नासिकामूलानतिलङ्घिच कल्प्यमित्यभिप्रेतम् । एकाङ्गुलद्व्यङ्गुलादि परिमाणभेदनासिकामूलाभिव्याप्तत्वयो प्रतिपादनानुरोधात् ऊर्ध्वपुण्ड्रशास्त्रेषु ‘ ऊर्ध्वपुण्ड्रमृजु सौम्य सुपार्श्व

सुमनोहर ' मित्यादिनोर्ध्वपुण्ड्स्यऋजुत्व सौम्यत्वमुपार्श्वत्व सुमनोहरत्वादि मात्रस्यात्यन्तावश्यकताप्रतिपादनानुरोधाच्च । यथोक्तरूपमूर्ध्वपुण्ड्रस्य मूल तरुस्कन्धाकारवत् प्रफुल्लपद्माकारवच्च अर्धेन्दुमण्डलाकारमपि सभवतीत्यभिप्रायेणैव ' अष्टमीन्दुकलाधार ललाटस्थोर्ध्वपुण्ड्रक ' इत्यभिहितम् ।

अष्टमीन्दुकलाकारेति पाठेतु ललाटस्य तद्विशेषण नोर्ध्वपुण्ड्रस्य । सच्छिद्रस्योर्ध्वपुण्ड्रस्य पूर्णिमाचन्द्रमण्डलार्धसमानाकारेण अष्टमीन्दुबिम्बेन अच्छिद्रेण समाकारत्वासभवात् ललाटस्यैवाष्टमीन्दुबिम्बाकारतावर्णनस्य प्रसिद्धत्वात् । समानप्रकरणस्थेन—

अष्टमीन्दुकलाकारे ललाटे दर्पणस्फुटे ।
ऊर्ध्वपुण्ड्र दधाराथ श्रीनिवासस्सतागति ॥

इत्यादि प्रागुदाहृतभविष्योत्तरपुराणैकादशाध्याय वचनेनैककण्ठ्याच्च । उक्तच वाराहपुराणद्वितीयभागे चतुर्थाध्याये पद्मावत्यवयवसुलक्षणान्यभिदधता नारदेन—

अकलङ्काष्टमीचन्द्र सदृशोऽतिमनोहर ।
दृश्यतेय ललाटस्ते नीलालकसुशोभित ॥

इति ललाटस्य अष्टमीचन्द्र तुल्याकारत्वम् ।

ईदृशपाठपक्षेऽपि यथोक्तसमूलसान्तरालरेखाद्वयात्मकमेवोर्ध्वपुण्ड्र श्रीनिवासस्य धारयितव्यम् । उदाहृतश्रुत्यादिप्रामाण्यात् उदाहृतभविष्योत्तरपुराणैकादशाध्याय वचनप्रामाण्याच्च ॥

यद्यपि हरिद्राचूर्णरेखया मध्यस्थयासह त्रिरेख समूलमूर्ध्वपुण्ड्रमेव दर्शितप्रमाणसिद्धम् । श्रीनिवासेनापि तादृशमेव पुण्ड्र धृतमितिच दर्शितभविष्योतर पुराणवचनसिद्ध तथापि द्विरेखोर्ध्वपुण्ड्रस्यापि बहुप्रमाणसिद्धत्वात् ईदृशपुण्ड्रस्य शैवाक्रमणपूर्वकालपर्यन्त धार्यमाणताया वृद्धैरभिधीयमानत्वाच्च तादृशपुण्ड्रधारणमपि नदोषायेतिबोध्यम् । एवमूर्ध्वपुण्ड्राणा कर्माङ्गालकारादि रूपाणा नानाविधाकाराणा कस्तूरीकर्पूरश्वेतमृत्तिका

गोपीचन्दनमुक्ताहेमरजतादिरूपाणा ऊर्ध्वपुण्ड्रद्रव्याणाच शास्त्रसिद्धत्वात् तत्तद्देशकालानुगुण चारुतानुगुणच तदातदा तत्तद्द्रव्यैरूर्ध्वपुण्ड्रधारण भगवतस्तत्तद्देशकाल सभवानुरोधेन कर्तुमुचितमित्यपि बोध्यम् ।

तस्मात् सप्रति श्रीनिवासभगवतो देवतान्तरशङ्काकलङ्कितस्य द्रष्टृणा तादृशकलङ्कपरिहाराय शैवजनाक्रमण पूर्वकालपर्यन्तस्थितरीत्यानुगुण्येन समूलसान्तराल रेखाद्वितयात्मक यथोक्तरूपमूर्ध्वपुण्ड्र घनतरघनसारचूर्णमय प्रस्फुट सदा धारयितव्यमिति ॥

ततश्च सभगवान् रामानुजमुनि अनुपदमेव समागते भार्गववासरे अभिषेकसमये प्रथम मूर्ध्नि समर्प्यमाणेन गगनगगातीर्थेन श्रीनिवासभगवद्दिव्यललाटे समर्पितयो द्वयोरप्यूर्ध्वपुण्ड्ररेखयो प्रमुषितयोरपि तन्मूलभूते अर्धचन्द्राकारशालिनि नासिकामूलधृतोर्ध्वपुण्ड्रभागे परमनपमृष्टे तदवलोकयन् पूर्व परिगृहीत जगन्मोहिनीवेषस्यास्य 'अर्धचन्द्राकृति स्त्रीणा धार्य पुण्ड्र भ्रुवोरध' इति वसिष्ठसहितावचनेन तदानीतनदशानुगुण मादृशमूर्ध्वपुण्ड्र यथा तत्रत्यसकलदेवासुरव्यामोहजनकमासीत् तथा निखिलजगन्मोहन दिव्यमङ्गलविग्रहशालिनोऽस्य श्रीनिवासस्यापि नासिकामूले विराजमान प्रमुषितोपरितनरेखाद्वितय अर्धेन्दुमण्डलाकार इदमूर्ध्वपुण्ड्रमूल अतिशयितशोभावह आश्रितजनदृष्टिचित्तापहारिच विलोक्यते । तदस्य भगवत एतावन्मात्ररूपमप्यूर्ध्वपुण्ड्र कञ्चित्काल धारयितव्यमिति परिचिन्तयन् तथैव भगवताप्यकस्मादेवार्चकमुखेन नियमितस्सन् ततोऽभिषेके निर्वृत्ते यथोक्तरीत्या कर्पूररेणुभि समूलरेखाद्वयात्मक ऊर्ध्वपुण्ड्र नासिकामूलप्रभृत्याकेशान्त ललाटे धारयित्वा तदनु इत प्रभृति शुक्रवारमारभ्य दिनत्रयमीदृशरीत्यैवोर्ध्वपुण्ड्र धारयितव्यम् । तदनन्तरम्—

आदौ कृतयुगे जम्बूद्वीपे भारतवर्षके ।
गङ्गाया दक्षिणे भागे योजनाना शतद्वये ॥

पञ्चयोजनमात्रेतु पूर्वाम्भोधेस्तु पश्चिमे ।
मासे भाद्रपदे विष्णुतिथौ विष्णुसमन्विते ॥

सिद्धयोगे सोमवारे गिरौ नारायणाह्वये ।
स्वामिपुष्करिणीतीरे पश्चिमे भूत्यपश्चिमे ॥

बृन्दारकाना बृन्दैस्तु प्रार्थितो लोकरक्षक ।
आविर्बभूव भगवान् श्रीनिवास पर पुमान् ॥

इति त्रयस्त्रिंशाङ्कचिह्नित पाद्मपुराणदशमाध्यायस्थ श्रीनिवासाविर्भाव काल प्रतिपादनपरघट्टवचनेषु श्रीवेंकटनाथदिव्यावतार वारतयाऽवगत सोमवासरप्रभृति दिनत्रयमुपरितनरेखाद्वयविधुर अर्धेन्दुमण्डलाकार नासिकामूलधृत ऊर्ध्वपुण्ड्रमूलपरमवस्थाप्य तदूर्ध्व ललाटे हारिद्रश्रीकुङ्कुमचूर्णरेखा ऋज्वी ललाटकोटिधृत नवरत्नखचित तिरश्चीनललाटिकपट्टबन्धाख्य दिव्यभूषणस्पृशम् दीर्घा तादृशभूषणा नासिकामूलपर्यन्त व्यालम्बमानाभ्या विशुद्धस्थूलमुक्ताफलसरमयीभ्यामुभाभ्या रेखाभ्यामलङ्कृतपार्श्वद्वया आपाततोऽवलोकनेन समूलत्रिरेखोर्ध्वपुण्ड्र सद्भावदशाशोभामेवावहन्ती धारयित्वा तादृशश्रीदशानुगुण शीतलद्रव्यमय अञ्जनमपि भगवद्दिव्यलोचनयोस्समर्पणीयम् । तदनु गुरुवारे परदिनाभिषेककरणौपयिकतया सकलदिव्याभरणादि प्रत्यवरोपण कृत्वा भगवतो ललाटे सुवर्णप्रत्युप्त विशुद्धहीरकमणिजालमयसमूलरेखाद्वय श्रीचूर्णरेखास्थानीय मध्यस्थितकनकस्थगित दीर्घतरकुरुविन्दरेख दिव्याभरणरूपमेव समूलत्रिरेखोर्ध्वपुण्ड्र धारयित्वा सकलदिव्यावयवसर्वदिव्याभरणस्थाने पुष्पकवचमेकललाटेतर सकलदिव्यावयवछादक समर्पणीयम् ।

तदनु शुक्रवारे प्रात ललाटस्थ दिव्याभरणरूपमूर्ध्वपुण्ड्र तदितरसर्वावयवछादक पुष्पकवचचावतार्य ललाटे श्वेतमृत्तिकामयसमूलरेखाद्वय श्रीचूर्णमयमध्यरेख ऊर्ध्वपुण्ड्र अधरोर्ध्वकाययो परिधानोत्तरीयरूप सूक्ष्मवस्त्रयुगल धारयित्वा प्रथमाराधन निर्वर्त्य ततो मध्याह्ने अभिषेक कारयित्वा पुनर्यथोक्तरीत्या घनतरघनसारचूर्णमय समूलत्रिरेखात्मकमूर्ध्वपुण्ड्र धारयितव्यम् । दिव्याभरणमय यथोक्तरूपमूर्ध्वपुण्ड्र तु ललाटदिव्यशोभाकर तदातदा वैशेषिक महोत्सवकालेष्वपि भगवतो धारयितव्यम् ।

दीपशिखाकार कस्तूरिकोर्ध्वपुण्ड्रादिकतूत्सवबेरादीना धारयितव्य मिति व्यवस्थामारचयामास ।

एव पुनरपि स भगवान् रामानुजमुनि शूराणा निजशौर्योपकरण-भूतानि निजायुधानि चन्दनकुसुमादिभिरलङ्कृत्य अनन्तरमेव तै स्वालङ्कारा-ङ्गीकारन्यायेन भगवत श्रीनिवासस्यापि तिसृष्वपि सन्ध्यासु चन्दनकुसुम मालादिभिरभ्यर्च्चनसमये प्रथम तदीयविजयपरपराप्रधानसाधनभूताना श्रीम-त्सुदर्शन पाञ्चजन्य दिव्यचरणारविन्दादीना अलकार कृत्वा पश्चात् वक्षो-निलयकनककण्ठिकालयपद्मावतीदेव्या तत किरीटस्य ततो दिव्यावयवानाच चन्दनकुसुममालादिभिरभ्यर्चन कार्यमिति च व्यवस्था चकार ।

एव प्रतिशुक्रवार भगवदभिषेकानन्तर भगवद्वक्षोनिलयाया कनक-मयकण्ठिकालयाया श्रीपद्मावतीदेव्या अभिषेकार्थ वक्षस्थलादवतरणसमये नित्यानपायिन्यास्तस्या क्षणकालमपि भगवद्वक्षोविश्लेषासहिष्णुताशीलमनु-सन्धाय सभगवान् रामानुजमुनि तदपरावतारभूत भूदेव्यशावतीर्ण श्रीगोदा-देवीप्रणीतस्य भगवद्विश्लेषकालविनोदनापाय वेदवर्गप्रतिपादनपरस्य त्रिचत्वा-रिंशदुत्तरशतगाथस्य गोदाश्रीसूक्तनाम्नो दिव्यप्रबन्धस्य अनुसन्धान तदानीन्त-नविश्लेष खेदापनोदनोपायतया नियत कर्तव्यमित्यपि व्यवस्थामकार्षीत् ।

अनन्तर सभगवान रामानुजमुनि तत्रत्यवृद्धै कथिता अस्यश्रीवेङ्क-टाद्रि दिव्यसस्थानस्य दुर्भेदकाननपाषाणमयस्य विस्तीर्णदिव्यनगरनिर्माणा-योग्यतया किंचित्कालात्पूर्व द्रुमकुठारनाम्ना केनचिद्भक्तेन भगवद्दिव्यालय-प्राकारपरित शिलाद्रुमदन्तुरान् प्रदेशान् कथचित्समीकृत्य लघ्वी काचिद्वीथि निर्माय भगवत्कैङ्कर्यपराणा निवासस्थान पर परिकल्पितम् । भगवतो महो-त्सवेषु दिव्ययात्रायोग्या नगरीवा तद्गता महती परितोवीथिर्वा नेह निष्पादिता । ततो भगवतो महोत्सवादिकरणस्यतु नात्रावकाश । अतोहेतो अत्रत्या प्राञ्चो राजान. 'देवास्थानतुपरितो विशिखाकरणाक्षमे । समीपेतु पुरीं-कृत्वा तत्रदेवोत्सवंचरेत्' इत्यादि वैष्णवागमोक्तरीत्या श्रीवेंकटनाथस्य

ब्रह्मोत्सवारम्भे अङ्कुरार्पणपूर्वकं ध्वजारोहणसमनन्तरं श्रीवेंकटगिरेरुपत्यका-स्थाया श्रीशुकपरीनामधेयाया राजधान्यामवरोहितस्य तत्राष्टसुदिनेषु साय-प्रात वीथीषु सवाहनंयात्रागर्भ मविकलसकलोपचारगर्भंच महोत्सवं निर्वर्त्य नवमदिवसे प्रातर्माङ्गलिकावभृथस्नानान्तमुत्सवशेषच यथाविधि निर्वर्त्य तत-स्साय सपरिवार श्रीवेंकटगिर्यारोहण कारयित्वा ध्वजावरोहण पुष्पयागादिकतु तत्रैव निरवर्तयन् ।

तत प्रभृति भगवत उत्सव गिरेरधस्तादेव निर्वर्त्यतइति कथामाकर्ण्य समाकुलमना प्राक्चतुर्मुखतोण्डमाश्वकवर्ति प्रभृतिभिरिव अद्यतनैरप्यस्मिन् गिरावेव सावभृथ भगवत उत्सवादिक निर्वर्तनीयमिति परिचिन्त्य भगवद्दि-व्यालयपरित सर्वत्र विषमस्थलानि समानि कारयित्वा दिव्यनगरी निर्माप्य तत्र प्रासादमालापरिष्कृतोभयश्रेणी महोत्सवदिवसेषु सवाहन भगवद्दिव्य-यात्रायोग्या परितश्चतस्रोमहतीर्विशिखा कल्पयित्वा स्वामिपुष्करिण्या पूर्व स्मिन् तीरे दक्षिणोत्तरा क्रोशपरिमाणा महती काचिद्वीथि तत्पूर्वभागे चतुर-श्रामपरा वीथिच मृगयोत्सवयात्रायोग्या निर्माप्य गिरावेव सर्वमुत्सवादिक निर्वर्तयामास ।

एव तदानीमुत्सवबेरतया आराध्यमानस्य वेंकटवासिनाम्नो भगवद्दिव्य मङ्गलविग्रहस्य अवतारदिनवैभव दिव्यनगराभिवृद्धे कनकलतायोगावतीर्ण श्रीश्रीनिवासोत्तरोत्तर दिव्यैश्वर्याभिवृद्धेश्च प्रतिरोधकमिति प्रसिद्धमैतिह्य वृद्धज-नमुखादाकर्ण्य तदानी कौतुकबेरतया आराध्यमानस्य शैलेशनाम्नो भगवद्दि-व्यमङ्गलविग्रहस्य उत्सवबेरस्थानाभिषेक प्रागुक्तस्य वेंकटवासिनाम्नो भगव-द्दिव्यमङ्गलविग्रहस्य कौतुकबेरस्थानाभिषेकच कारयित्वा प्राणधारणादिपूर्वक यथाविधि प्रतिष्ठाच कारयित्वा यथाशास्त्र तयोराराधनमपि श्रीरामानुजमुनि निर्वर्तयामास ।

एव निजसनिधौ पञ्चसस्कार स्वीकरणपूर्वक भगवत्समाश्रयणलब्ध-पारमैकान्त्यस्य श्रीवैखानसतन्त्रसारपारदृश्वनो बिम्बाधरनाम्नो भागवतोत्तमस्य

अर्चकवर्यस्य वशस्थैरेव भगवत श्रीवेंकटनाथस्य नित्याराधन निर्वर्तनीय-
मित्यपि योगीश्वरो व्यवस्थापयामास ।

इत्थ यथाशासन निर्वर्तनबद्धश्रद्धेन निजान्तरगकिंकरेण यादवराजेन यथामनोरथ श्रीवेंकटनाथ सर्वविधकैङ्कर्यनिर्वाहधुरधर ततस्सजातनिरवधिक-
सन्तोषै सर्वैरपि भागवतवृद्धै —

शेषोवा सैन्यनाथोवा श्रीपतिर्वेति सात्त्विकै ।
सर्वैरपि वितर्क्याय यतिराजाय मङ्गलम् ॥
शुद्धैर्भागवतै श्शिष्यैरतरगैश्च किङ्करै ।
सम्यग्विदिततत्त्वाय यतिराजाय मङ्गल ॥
श्रीवेंकटाचलक्षेत्र शैवापन्मोक्ष कारिणे ।
विष्णुपारिषदेशाय यतिराजाय मङ्गलम् ॥
श्रीवेंकटाचलेशस्य शङ्खचक्रप्रदायिने ।
सदाचार्याय तस्यास्तु यतिराजाय मङ्गलम् ॥
श्रीमद्भूष्णवसिद्धान्तरक्षणे सर्वत क्षितौ ।
बद्धदीक्षाय गुरवे यतिराजाय मङ्गलम् ॥
कुदृष्टिकुहनाक्रान्त वेदान्तापद्विमोक्षिणे ।
श्रीरामानुजसज्ञाय यतिराजाय मङ्गलम् ॥
विशुद्धब्रह्ममीमासा कुदृष्टिकलितापदाम ।
निवर्तकाय निर्मूल यतिराजाय मङ्गलम् ॥
मूर्ताय दिव्यसूरीणा प्रवृत्ताय कलेर्हतौ ।
महाकृपाप्रवाहाय यतिराजाय मङ्गलम् ॥
अनेकेष्ववतारेष्व प्यनिर्वृत्त हरेर्मतम् ।
क्षणेन निर्वर्तयते यतिराजाय मङ्गलम् ॥
अशेषलोकवन्द्याय गुरवे शेषमूर्तये ।
श्रीमद्रामानुजायास्तु यतिराजाय मङ्गलम् ॥ १० ॥

इत्येव सादर सततविरचितमङ्गलाशासन —

पाषण्ड द्रुमषण्ड दावदहन श्चार्वाकशैलाशनि
बौद्धध्वान्तनिरास वासरपतिर्जैनेभकण्ठीरव ।
मायावादि भुजङ्गभङ्गगरुड स्त्रैविद्यचूडामणि
श्रीरङ्गेश जयध्वजो विजयते रामानुजोऽयमुनि ॥

पाषण्ड षण्ड गिरिखण्डन वज्रदण्डा ।
प्रच्छन्नबौद्ध मकरालय मन्थदण्डा ।
वेदार्थसार सुखदर्शन दीपदण्डा
रामानुजस्य विलसन्ति मुनेस्त्रिदण्डा ॥

चारित्रोद्धारदण्ड चतुरनयपथालङ्क्रिया केतुदण्ड
सद्विद्यादीपदण्ड सकलकलिकथासंहृति कालदण्डम् ।
त्रय्यन्तालम्बदण्ड त्रिभुवनविजयच्छत्र सौवर्णदण्ड
धत्ते रामानुजार्य प्रतिकथकशिरो वज्रदण्ड त्रिदण्डम् ॥

त्रय्यामाङ्गल्यसूत्र त्रियुगयुगपथा रोहणालम्बसूत्र
सद्विद्यायन्त्रसूत्र सगुणनयविदा सपदा हारसूत्रम् ।
प्रज्ञासूत्र बुधाना प्रशमधनमन पद्मिनीनालसूत्र
रक्षासूत्र यतीना जयति यतिपतेर्वक्षसि ब्रह्मसूत्रम् ॥

पाषण्ड सागर महाबडबामुखाग्नि
श्रीरङ्गराज चरणाम्बुज मूलदास ।
श्रीविष्णुलोक मणिमण्डप मार्गदायी
रामानुजो विजयते यतिराजराज ॥

इत्येव समतत सजोघुष्यमाणबिरुदावलि वैदिकसार्वभौमो भगवान्
रामानुजमुनि

शुकाद्या मुनय केचिद्भृग्वाद्याश्च तपोधना ।
प्रह्लादप्रमुखा पुण्या अम्बरीषादयो नृपा ॥

विष्णोरेवापरंदेहं मन्वानास्त नगोत्तमम् ।
पद्भ्यामाक्रमितु भीता पर्यन्तेष्वेव वर्तना ॥

तन्निर्गतनदीष्वेव कुर्वाणा स्नानतर्पणे ।
तप कुर्वन्ति वाञ्छन्त साक्षात्कर्तु जनार्दनम् ॥

इत्येकविंशाङ्कचिह्नित वामनपुराणभागद्वितीयाध्यायवचनेषु परावरतत्व-विदग्रेसराश्शुकादय परमयोगिन प्रह्लादादय परमभागवता अम्बरीषादयो महाभागवतराजर्षयश्च श्रीवेङ्कटगिरौ तत्र विराजमाने भगवतिच समानप्रति-पत्ति कुर्वाणा प्राकृतेन निजशरीरेण तत्रापि पद्भ्याच तादृशगिरिसंस्पर्शमसह-माना पर्यन्तेष्वेव तप कुर्वन्ताऽवर्तन्नेति प्रतिपादनात् ।

भगवन्निर्हेतुक कृपासागर परिवाहलब्धदिव्यज्ञानेन निवृत्ताविद्येषु श्रीपराङ्कुशपरकालादि दिव्यसूरिष्वपि श्रीपराङ्कुशदिव्यसूरिणा श्रीमुखसूक्त-नाम्न्या द्राविडब्रह्मसंहिताया तृतीयकाण्डतृतीयश्रीमुखसूक्ते सप्तमगाथाया—श्रीवेङ्कटेशो न साम्यलक्षण मोक्ष दद्यान्महागिरिरिति । अष्टमगाथाया श्रीवेङ्कटमहाचले एकस्मिन्नेव उपास्यमाने अस्मदघविनश्येदिति । नवमका-ण्डतृतीयश्रीमुखसूक्ताष्टमगाथाया—उत्तारकेणाधिष्ठित वेङ्कट श्लाघ्याया पृथिव्या अवस्थितमुपगम्य देवा भजमाना इत्यभिधानात् । श्रीभक्तिसारदिव्यसूरिणा चतुर्मुखश्रीमदन्तादि सञ्ज्ञितनिजद्राविडसंहिताया द्विचत्वारिंशगाथाया—गत्वा प्रणमत नितरामुत्तुग वेङ्कट स्थिरीभूय । पापहर शैलेनेति । पञ्चचत्वारिंशगा-थाया—शिशिरनिर्झरो वेङ्कटएव परमपदवासिना भूवासिनाच परमप्राप्यइति । अष्टचत्वारिंशगाथाया—वेङ्कटएव परमपदवासिभि परमप्राप्यतयोपास्यमान वेङ्कटएवच सत्यपापव्याधिनिवर्तनकारीति चाभिधानात् । श्रीकलिवैरिदिव्य-सूरिणा श्रीसूक्ताख्य निजद्राविडसंहिताया प्रथमकाण्डेऽष्टमश्रीसूक्ते नवमगाथासु—श्रीवेंकट भज मन इत्यभिधानात्। एवमेवानेकस्थलेषु प्रायशस्सर्वै सूरिभि वेंकटाचलस्यैव प्राप्यत्वप्रतिपादनेनच दिव्यसूरयोऽपि श्रीवेंकटगिरि तत्रवसन्त भगवन्तच तुल्यतया प्राप्य प्रापकच मन्वाना प्राकृतशरीरेण

श्रीवेंकटगिरि पद्भ्या नस्प्रष्टुमर्ह इत्येव मत्वैव तगिरिमनारोहन्तएव मङ्गलाशासनमकार्पुरित्यवगमनाच्च । श्रीवेंकटगिरेरधित्यकाया श्रीपराङ्कुशादि दिव्यसूरीणा प्रतिष्ठापने तेषामेवाभिमन्ध्यभाव निश्चित्य तदुपत्यकायामेव श्रीपद्पुर्या प्रत्येकशो दिव्यालयेषु श्रीवेंकटाभिमुखास्तदीयमङ्गलाशासनैकपरायणान् तान् दिव्यसूरीनपि यथाविध्यर्चारूपेण प्रतिष्ठापयामास ॥

एव तत किचित्कालात्पूर्वमनेकजन्मार्जित पापपरपरावशेन निजशैव मत दुरभिमान साम्राज्यतस्स्वराष्ट्रभूते चोलदेशे समततोऽनेकविष्णुक्षेत्रप्रद्रोह कृतवता ततएव कर्मपरिपाकात्सजातस्य सक्रिमर्महत कण्ठेगडार्वेगता विपन्नेन ततएव क्रिमिकण्ठनाम्ना विख्यातेनाव्यपदेश्येन चोलराजेन स्वकृतविष्णुक्षेत्र प्रद्रोहमहाप्रलयसमये श्रीकावेरीतीरवर्तिन कण्वमहामुनि तपश्चर्याफलीभूत प्रत्यक्षप्रादुर्भावश्रीगोविन्दराज भगवत्क्षेत्रस्य चित्रकूटाभिधानस्यापि प्रद्रोहे प्रसक्ते कान्दिशीकै कतिपयश्रीवैष्णवै श्रीगोविन्दराजभगवदुत्सवमूर्तिभूत देवाधिदेव पर परिपाल्यानीय तदाप्रभृति वेंकटगिरेरुपत्यकाया श्रीपद्पुर्यामाराध्यमान तन्मूलमूर्तिभूत श्रीगोविन्दराजाभिधान भगवन्त श्रीचित्रकूटाधिनाथ क्षीरार्णवशायिन नीलमहार्णवतीर्थशायिन चक्रुत समाकर्णयन् सभगवान् रामानुजमुनि पुराणप्रसिद्ध श्रीकुलशेखर कलिवैरि दिव्यसूरिभ्या कृतमङ्गलाशासन श्रीचित्रकूटाख्य दिव्यक्षेत्रमित्थ निर्मूलहत नभवितुमर्हतीति खिन्नमानस भविष्यतिच नून तस्मिन्नेव क्षेत्रे पुनरपि भगवत प्रादुर्भाव नहिखलु महर्षिदिव्यसूरि तपश्चर्यामङ्गलाशासने आत्यन्तिकी दिव्यक्षेत्रहानि सहेयाताम् ।

सप्रतितु तमेत भगवन्त श्रीचित्रकूटनाथ श्रीगोविन्दराजमिहैव सप्रतिष्ठापयाम इत्यभिदधान निजान्तरङ्गकिंकर यादवराजमाहूय स्वाभिप्राय कृत्स्नमावेद्य तच नीलमहार्णवतीर्थशायिन श्रीगोविन्दराजाभिधान देवाधिदेवनाम्न उत्सवबेरस्य मूलबेरभूत श्रीचित्रकूटाधिनाथ भगवन्त क्षीराब्धिशायिनमपि निगूढमावाह्य श्रीगोविन्दराज देवाधिदेवावुभावपि श्रीवेंकटनाथादवि-

शेष श्रीवैखानसागमोक्तविधिनैव श्रीपद्मपुर्या दक्षिणभागवर्ति महातडागपार्श्वे प्रतिष्ठापयामास ॥

सचभगवान् गोविन्दराजाभिधान क्षीराब्धिनाथ श्रीदेवीभूदेवीसेव्यमान दिव्यचरणनलिनयुगल नाभिकमलाधिष्ठितचतुरानन मधुकैटभाधिष्ठितपादपार्श्वे मधुकैटभनिरसनार्थविषज्वालाजालोद्गमन करविकसद्विनिश्वसद्वक्त्रकुहरमालप्रोद्यत्फणामण्डले शेषाहितल्पे शयान पृथुलतरदीर्घतर कोटीरप्रमुख दिव्यभूषणभूषित चतुर्भुज शङ्खचक्रादि दिव्यायुधधर दक्षिणभागविन्यस्तमस्तक उत्तरभागविन्यस्त प्रसारितपादारविन्दयुगलश्च प्रतिष्ठापित ॥

इत्थ श्रीरामानुजमुनिनियमितो नारायणपुरवासी देशाधिपति यादवराज स्वाचार्यशासनानुरोधेन श्रीपद्मपुर्या दक्षिणभागे महातटाकपार्श्वे महति दिव्यालये यथोक्तरूप श्रीगोविन्दराज प्रतिष्ठाप्य तद्दिव्यालयपरित स्वाचार्यनाम्ना रामानुजपुरनामावान्तरपुरच निर्माप्य प्रागेव श्रीश्रीनिवासभोगतल्पभूत क्रीडाद्रिरूप शेष परिसरवर्तिन्या तत्प्रकोपप्रदूयमानाया श्रीपद्मपुर्यो मधुकैटभनिरसनार्थ विषानलज्वाला प्रोद्गमन श्रीगोविन्दराजतल्पभूतस्य अनन्तस्यापि प्रकोपेन भयोऽपि महानर्थप्रसङ्गभयेन श्रीरामानुजमुनिशासनेनैव नदीयान् प्राचीनान् काश्चित्सन्निवेशान परिवर्त्य तत्तद्दिव्यसूरिदिव्यालयाश्च श्रीवेंकटाचलोपत्यकाया यथापूर्वमनिवेशमेव सस्थितान् तत्रतत्र प्रकल्पितावान्तरपुरमध्यस्थाश्चकृत्वा तापुरी शेषकोपप्रशान्तिकर गरुडव्यूह सस्थानसस्थिता श्रीशेषाचलदूरविप्रकृष्टाच निर्मापयामास ॥

इत्थ यथोक्तकारिण श्रीवेंकटाद्रिदिव्यसस्थान सबन्धिदेशाधिपतेर्नारायणपुरवासिन स्वान्तरङ्गान्तेवासिनो यादवराजस्य अनुकूलवृत्तितया सभगवान् रामानुजमुनि स्वप्रार्थनानुगुण्येन शैवजननिरसनार्थ शङ्खचक्रादि स्वासाधारणदिव्यायुधधरे श्रीमति वेंकटनाथे स्वप्रतिष्ठापिते श्रीगोविन्दराजभगवतिच अभिमानातिशयेनच स्वयविशेषत श्रीरङ्गवासरसिकोऽपि श्रीरङ्गक्षेत्रप्रति गत्वा-

गत्वा पुन पुनरागच्छन् कृतासु त्रिचतुरासु श्रीवेंकटाद्रियात्रासु श्रीवेंकटाद्रिसंबन्धिदिव्यदेशे तदातदा तत्तद्देशकालचरित्रविशेषानुगुणान् बहून् विशेषान् रचयामास ।

सच यादवराजो भगवद्भाष्यकारान्तेवासी स्वाचार्यशासनानुवर्तनैकपरायण स्वाचार्यप्रतिष्ठापिते श्रीगोविन्दराजे स्वाचार्यसञ्ज्ञाचिह्निते तदीये श्रीरामानुजपुरे विशेषाभिमानवशेन मण्डपगोपुरप्राकारादीन् दिव्यालयाङ्गभूतान् नगराङ्गभूत तत्तद्वीथिकल्पनादिविशेषान् भगवतस्तत्तदुत्सवविशेषाश्च निर्वर्तयन्नासीत ।

श्रीहरिवंशे पौष्करप्रादुर्भावघट्टे भविष्यपर्वान्तगत त्र्याधिकद्विशततमाध्याये महार्णवशायिनो भगवतो नारायणस्य 'विष्णुस्तमसि सभूतो मधुर्नाम महासुर । तस्यैवतुमहायोऽन्यो जातो रजसि कैटभ, इत्यादिना मधुकैटभदानवसमागमस्य—

तत शयान श्रीमन्त बहुयोजन विस्तृतम् ।
पद्मनाभ हृषीकेश प्रणम्योवाचतामुभौ ॥

इति मधुकैटभाभिवन्द्यतायाः ।

ततस्तावूचतुस्तत्र ब्रह्माणमसुरोत्तमौ ।
दृष्टौ युयुत्सया क्रूरौ क्रोधसरक्तलोचनौ ॥

कस्त्व पुष्करमध्यस्थस्सितोष्णीषश्चतुर्मुख । इति मधुकैटभयोश्चतुर्मुख प्रति प्रश्नदर्शनेन नाभीपद्मस्थितचतुराननतायाश्चावगमेन क्षीराब्धिनाथभूदेवी सवादरूपाया श्रीविष्णुस्मृतौ प्रथमाध्याये,

शेषपर्यङ्कग तस्मिन् ददर्श मधुसूदनम् ।
शेषाहिफणरत्नाशु दुर्विभाव्यमुखाबुजम् ॥

शशाङ्कशतसङ्काश सूर्यायुत समप्रभम् ।
पीतवाससमप्रेक्ष्य सर्वरत्न विभूषितम् ॥

मकुटेनार्कवर्णेन कुण्डलाभ्यां विराजितम् ।
संवाह्यमानाङ्घ्रियुगं लक्ष्म्या करतलैश्शुभैः ॥

शरीरधारिभिः शस्त्रैः सेव्यमानं समन्ततः ।
तं दृष्ट्वा पुण्डरीकाक्षम् ववन्दे मधुसूदनम् ॥

इति क्षीराब्धिनाथाकारवर्णनेन, तत्रैवाष्टनवतितमाध्याये --इत्येवमुक्ता वसुमती जानुभ्यां शिरसा च नमस्कारं कृत्वोवाच । भगवन् त्वत्समीपे सततमेव चत्वारि महाभूतालयानि आकाशं शङ्खरूपी वायुश्चक्ररूपी तेजश्च गदारूपी अम्भो अम्भोरुहरूपी । अहमप्यनेनैव रूपेण भगवत्पादमध्यपरिवर्तिनी भवितुमिच्छामि । इत्येवमुक्तो भगवान् तथेत्युवाच । वसुधापि लब्धकामा तथाचक्रे इत्युक्त्या श्रीवेङ्कटाचलमाहात्म्यपरब्रह्माण्डपुराणे प्रथमाध्यायस्थित क्षीराब्धिनाथवर्णनघट्टे 'संवाह्यमानचरणः श्रिया भूम्या च सादरं' मित्युक्त्या च श्रीदेवी भूदेवी संवाह्यमान चरणारविन्दत्वादि विशेषणावगमाच्च यथोक्तरूपः गोविन्दराजः प्रतिष्ठापितः ।

एवं 'दह्यमानावनन्तस्य विषज्वालाभिरेव च'। इति वचनेन मधुकैटभयोः क्षीराब्धिनाथतल्पभूतानन्तविषज्वालादह्यमानताप्रतिपत्त्या नगरस्यापि तदधीनदाहप्रसङ्गभिया गरुडव्यूहसंस्थानेन तन्निर्माणम् कारितम् ।

**इत्थं कारयित्वा स भगवान् रामानुजमुनिः ।**

भो यादवराज श्रीगोविन्दराजः श्रीवेङ्कटनाथश्च क्षीराब्धिनाथावताररूपतयैकवस्तुभूतावित्यवगच्छ ।

श्रीवेङ्कटनाथस्य क्षीराब्धिनाथावताररूपता च ब्रह्माण्डपुराणप्रथमद्वितीयाध्याययोः स्पष्टा । श्रीवेङ्कटनाथस्य श्रीवैकुण्ठनाथावतारभूतस्यापि क्षीराब्धिनाथांशमिश्रतया तदवताररूपत्वमपि शेषावतारभूतस्याद्रेर्भगवद्देहरूपत्वमिव सम्भवत्येव । यथोक्तम् ब्रह्माण्डपुराणद्वितीयाध्याये —

विष्णोरपरदेहत्वादाक्रामन्न पदैर्गिरिम् ।
नारायणांशसम्भूतः शेषोऽहिर्गिरिरूपधृत् ॥ इति ।

अतः तुल्यतया उभयोरुत्सवादिकं परस्पराविरोधेन निर्वर्तय ।

एवं विप्रकृष्टसन्निकृष्टौ श्रीवैकुण्ठनाथ क्षीराब्धिनाथावतारभूतौ श्रीवेंकट-नाथश्रीगोविन्दराजौ तयोरेव लीला दर्शयन्तौ परस्परैक्यमेवावगमयत ।

यथा हि सुदूरविप्रकृष्ट श्रीवैकुण्ठनाथ आर्ताना ब्रह्मादीना निजार्तिवि-ज्ञापनायोग्यत्वेनातिदुर्लभतया आर्तध्वनि श्रुत्वा तद्रक्षणाय देवादीना सुखेन समाश्रयणीयत्वाय च स्वयमेव क्षीराब्धिमुपागत सन्निकृष्ट. सुलभ समिन्धे । तथैव श्रीवेंकटनाथोऽपि समुत्तुङ्गगिरिशृङ्गवर्ती विप्रकृष्टो मन्दशक्तिनां आर्ताना समाश्रयणायोग्यतया दुर्लभस्सन् स्वयमेव सुखेन तत्समाश्रयिणित्वाय श्रीपदपुर्या रूपान्तरेण सन्निकृष्ट सर्वसुलभ समिन्धे ।

किंबहुना श्रीवैकुण्ठनाथक्षीराब्धिनाथयोरैक्ये तदवतारभूतयो श्रीवे-ङ्कटनाथश्रीगोविन्दराजयोरपि तद्वदैक्य सुगमम् ॥ किंच । इत्थं कलौ किंचि-त्कालानन्तर केनचित्कारणेन क्षीराब्धिनाथावतारभूत चित्रकूटदिव्यक्षेत्राधि-नाथ श्रीगोविन्दराज श्रीवेङ्कटाद्रेरुपत्यकाया श्रीपदपुर्या समागमिष्यति । तदा-नीं च श्रीवैकुण्ठनाथ श्रीक्षीराब्धिनाथावतारभूतौ श्रीवेङ्कटनाथ श्रीगोविन्दराजौ श्रीवेङ्कटगिरेरधित्यकोपत्यकावर्तिनौ मन्दशक्तीनामार्ताना दुर्लभसुलभौ च सन्तौ । ब्रह्मादिदेवाना विप्रकर्ष सन्निकर्षाभ्या दुर्लभसुलभयो रूर्ध्वाधरस्थाना-वस्थितयो समूलभूतयो श्रीवैकुण्ठनाथ क्षीराब्धिनाथयोरेव लीला प्रकाशयन्तौ । तावेकवस्तुभावापन्नौ च वर्तिष्येते इति भाविवृत्तान्त विज्ञायैव श्रीवेदव्यास भगवदन्तेवासी त्रैकालिकसर्वधर्मवृत्तान्तविज्ञाता श्रीसूतमहामुनि श्रीवेंकटा-चलमाहात्म्यपर श्रीवाराहपुराणान्तर्गत प्रथमभागस्थैकषष्टितमाङ्कचिह्नितैकोन-त्रिंशाध्याये श्रीवेंकटेशाष्टोत्तरशतनामावल्या ‘ गोविन्दायनमो नित्य श्रीनिवा-साय ते नम ’ इतिपठन् श्रीश्रीनिवासगोविन्दराजयोरेकवस्तुभावापन्नतामेव ज्ञापयामास । तस्मात् क्षीराब्धिरेव श्रिय आकारस्थानतया श्रीपदसंज्ञाचिह्नित-पुरीरूपमापन्ना वर्तते । श्रीवैकुण्ठएवच किंचिद्वर्णव्यत्यासेन श्रीवेंकटसंज्ञा-चिह्निताचलरूपमापन्नो वर्तते । तत्र वर्तमानौश्रीगोविन्दराज श्रीनिवासौ क्षीरा-ब्धिनाथ श्रीवैकुण्ठनाथावेव । तौचैकवस्तुभावापन्नावेवेति सुदृढमध्यवस्यन्

परिपूर्णप्रतिपत्तियुक्तस्त्व तयोस्समानमेवोत्सवादिक परस्पराविरोधेन सम्यङ्निर्व-
र्तयेति यादवराज न्ययुङ्क्त ।

ततो यादवराजेन यथायतीन्द्राज्ञ श्रीगोविन्दराजस्याराधनमहोत्स-
वादिषु निर्वर्त्यमानेषु श्रीगोविन्दराजेऽपि तत्तदर्थिनामपेक्षित दृष्टादृष्टसकल-
फलप्रदायिनि प्रसिद्धे विराजमाने सति सन्तानार्थिनि काशिराजे श्रीवेंकट-
नाथ सेवितु सकुटुम्बे समायाते भगवान् श्रीवेंकटनाथ 'देहिमे ददामीत'
इति श्रुतिप्रसिद्धा प्रायशो देवनान्तरमुखेनैव निर्वर्त्यमाना लीला स्वकीयामेव
स्वसकल्पेनैव देवतान्तरगता लोकाना ज्ञापयितुकाम स्वयमपि परिगृहीत-
तादृशशील काशिराजमहिषी स्वप्ने तुभ्यमह सन्तान दास्यामि तव नासा-
मणी मे देहीत्यभ्यर्थयन्, तयाच राजमहिष्या भो स्वामिन् भर्तृपरतन्त्राह-
मस्मि यदि भर्ताऽनुमन्यते तर्हि दास्यामीति प्रत्युक्त एव तर्हि अहमप्य-
स्मदग्रजस्य श्रीगोविन्दराजभगवत परतन्त्रोऽस्मि । स यदि तुभ्य सन्तानदाना-
यानुमन्यते तदैव तुभ्यमह सन्तान दातु शक्नुयाम्, नान्यथेति प्रतिवदन्
प्राक् रामानुजमुनिनिर्णीता श्रीगोविन्दराजस्य स्वस्यच एकवस्तु ्लतानिबन्ध
ना एकवस्त्वन्तर्भूतत्वलक्षणा मेकवस्तुतामेव प्रकटीचकार ॥

एत वृत्तान्तमाकर्ण्य सभगवान् रामानुजमुनि यथा एकस्मिन्
दिव्यालये पञ्चाना बेराणा एकमूलतया ऐक्य तथैव श्रीगोविन्दराजभगवता सह
स्वस्यैक्यमस्मदभिमतमङ्गीकृत भगवता श्रीनिवासेन । अत इत प्रभृति
श्रीवेंकटनाथ श्रीगोविन्दराजयोराराधनसमये श्रुतिस्मृतीतिहासपुराणाद्यनुसन्धा
ने श्रीवेंकटाचलमाहात्म्यभाग श्रीचित्रकूटमहात्म्यभागावुभावप्युभयत्र अनु
सन्धेयौ । नित्यानुसन्धेयदिव्यप्रबन्धानुसन्धाने श्रीवेंकटनाथविषय श्रीचित्र-
कूटाधिनाथभूत श्रीगोविन्दराजविषये दिव्यप्रबन्धभागावुभावुभयत्रानुसन्धेयौ ।

श्रीवेंकटाद्रि श्रीपदपुरीरूपोभयस्थलवासिभि श्रीवैष्णवै इद स्थलद्वय
एकदिव्यदेश सभाव्य निजगृहेषु विवाहोत्सवादिकालेषु स्वस्वमहिषीसहितया
श्रीवेंकटनाथ श्रीगोविन्दराजयोरुभयोरपि सभावना कार्या । गर्भाविरुद्धाद्यनु-

सन्धानकालेष्वपि श्रीवेंकटाचलनिवास चित्रकूटविहारेत्युभयपद घटितमेवो-भयोर्गद्यबिरुदाद्यनुसन्धानच कार्यमिति व्यवस्थामप्यारचयामास ॥

एव श्रीरामानुजमुनि श्रीनिवासभगवत अनवधिकाविच्छिन्नैश्वर्याभि-वृद्धये तदीयवक्षोनिलयकण्ठिकाया यथा व्यूहलक्ष्मी प्रतिष्ठापिता तथा श्रीगोविन्दराजस्याप्यविच्छिन्नैश्वर्याभिवृद्धये काचनदेवी प्रतिष्ठापनायेति परि-चिन्तयन् श्रीभट्टनाथदिव्यसूरिकन्यकाभावमापन्नामयोनिजा श्रीतुलसीकानन-सभवा भूदेव्यशावतर्णा श्रीगोदादेवी अविकलसकलसल्लक्षणा श्रीगोविन्दरा-जाभिमुखप्रचरच्छायसुभगसौगन्धिकालकृतवामहस्ता तदीयदिव्यैश्वर्याभि-वृद्धिकारिव्यूहलक्ष्मीसबन्धियन्त्रमन्त्राद्धारादिभिर्यथाविधि लिखितैरलकृते दिव्य-सिहासने स्थिता भगवतो गोविन्दराजस्य दक्षिणे पार्श्वे पृथङ्मन्दिरे पृथक्स्थायि प्रधानमहिषीन्यायेन प्रतिष्ठापयामास ।

ततश्च तन्नियमनेन यादवराज श्रीगोविन्दराजस्य पुराणसिद्ध मिथुन-माससमहोत्सव श्रीगोदादेव्या कर्कटकमाससमहोत्सव धनुर्मासमहोत्सव यथाविधिच ससभ्रम निर्वर्तयामास । तदानी सयादवराज श्रीरामा-नुजमुनिनियमनेन श्रीगोदादेवीसमेत श्रीगोविन्दराजस्य सततमहाभाग-वतमङ्गलाशासनेन निर्विघ्नैश्वर्यसमृद्धि सपादयितुकाम श्रीगोविन्दराजाधिष्ठान-भूते श्रीरामानुजपुरे समततो बलिहरणवाधेषु बहूनि गृहाणि निर्माय श्रीशैल-पूर्ण श्रीमदनन्तार्यप्रभृतीना महाभागवतानामन्येषाच बहूना श्रीवैष्णवाना दत्वा तास्तत्र निवासयामास ।

एव— नगरस्यतु वायव्ये दिक्प्रदेशे समस्थले ।
पण्यवीथि प्रकुर्वीत प्रजानामभिवृद्धये ॥

इति शास्त्रानुरोधेन श्रीरामानुजपुरवायव्यदिग्भागे तन्नगरस्थजनानु-कूलतया पण्यवीथि धान्यागारतु पूर्वस्या दिशि देवस्य कारयेदिति शास्त्रानु-रोधेन भगवन्मन्दिरस्य पुरस्ताद्देवस्य धान्यागारच निर्मापयामास ॥

**इत्यनन्तार्यगुम्भितायां इतिहासमालायां**

**चतुर्थस्तबक ।**

# अथ पञ्चमस्तबकः

---

अथ श्रीवेङ्कटाचले भगवद्दिव्यालये वर्तमान पुष्पवापिकास्वर्णकूपादि वृत्तान्त उच्यते—

पुरा.

> नित्यं बिलेनचागत्य देवं नत्वा नृपोत्तम ।
> राज्यं चकार धर्मेण भुञ्जानो भोगमुत्तमम् ॥

इति भूगालोपाख्यानशब्दित वाराहपुराण द्वितीयभागान्तर्गत दशमाध्यायोक्तरीत्या तोण्डमान्चक्रवर्ती कलियुगादौ श्रीवेङ्कटनाथ दिव्यचरणारविन्दयुगळपरिपूर्ण भक्तिसम्पन्नस्तदनुग्रहेण राज्यं धर्मेण परिपालयन् समस्त भोगाश्च भुञ्जानो भगवदुपदर्शित श्रीनृसिंहबिलद्वारेण गत्वा श्रीनिवासमनुदिनमभिवन्दमान आसीत् ।

तदानीं तस्मिन् राजनि भगवत्सन्निधौ स्थिते—

> स्थिते कदाचित्क्षितिपे श्रीनिवासस्य सन्निधौ ।
> शत्रवश्च बलोद्रिक्ता रुरुधुस्तस्य वै पुरीं ॥

इति ब्रह्मपुराणसप्तमाध्यायोक्तरीत्या सामन्तराजसङ्घेषु तोण्डमान्नृपं जेतुं तदीय नगरं वेष्टयत्सु सचराजा तानभिद्रुत्य स्वदेशं धावतःताननुधाव्य प्रबलं युद्धंच कृत्वा क्षीणबलो मिलितैस्सर्वैरपि तै राजसङ्घै पराजयं प्रापितः कान्दिशीकः स्वदेशमागत्य श्रीनृसिंहबिलं प्राप्य श्रीनृसिंहमभिवन्द्य तद्बिलमार्गेण श्रीनिवासं सहमहिषीकं विहाररसिकसन्तमसमय उपससर्प ॥

ततश्च अकाले अन्तःपुरमागतं पुरुषमभिवीक्ष्य लज्जितयोः भगवता सह विहरन्त्योः श्रीभूदेव्योः सहसा पलायनपरायणयोरेका श्रीदेवी श्रीनिवासोरस्समारूढा श्रीवैजयन्तीमालाया अन्तर्दधे ।

अपरातु भूदेवी समीपस्थाया पूर्वकाले रङ्गदासेन नन्दनवनार्थं खाताया वापिकाया निपत्यान्तर्हिताबभूवेति कथा वृद्धजनै कथिता आपण्डितपामर सर्वत प्रसिद्धामाकर्ण्य श्रीरामानुजमुनि पूर्वकल्पेऽप्यकालायात तोण्डमान्नृपसमागमलज्जित श्रीनिवासमहिष्यपसरणमिद पुराणे प्रतिपद्यते । परतु तत्र गगाप्रस्थायि दाक्षिणात्य वीरशर्मविप्रवृत्तान्त प्रकरणे ईदृशमपसरणमवगम्यते ।

अद्यतु तोण्डमान्नृपशत्रुपरिभववृत्तान्तप्रकरणे तदभिधीयते । यथोक्त वाराहपुराण द्वितीयभागे दशमाध्याये वीरशर्मविप्रवृत्तान्ते,

अनुक्त्वा ब्रह्मणे तस्मै प्रविश्य बिलमुत्तमम् ।
श्रीनृसिह नमस्कृत्य पुन प्राप्य बिलोत्तमम् ॥

श्रीनिवास ययौ द्रष्टु श्रीभूमिसहित परम ।
त दृष्ट्वा सहसा यान्त जुगूहाते धरारमे ॥

प्रणमन्तमवोचत्त किमकाले नृपागत ।
नृपोऽवदत्प्रणम्येशं भीतोऽथ ब्राह्मणास्मृताम् ॥ इति ।

तथाच इदमीपत्कथावैषम्य कल्पभेदादिनिबन्धन भवितुमर्हति । किच भूतीर्थत्वेन पुराणप्रतिपन्नायामस्या वापिकाया भूदेव्या प्रवेशोऽपि सगत । अत क्रीडाविघ्नभयात् पलायिताया अस्या एता वापिका प्रविष्टाया अत्रैव निर्विघ्नक्रीडासिद्धये भगवता सहास्या अत्र प्रतिष्ठापन न्याय्य भवतीति अनुसधाय तदितिहासपरिपालनाय तस्या रङ्गदासवापिकाया भूदेवी तादृश तीर्थाधिपतिभावापन्न, भगवन्तच अर्चारूपेणाविर्भाव्य प्रतिष्ठाप्य अन्तर्निवेश्य प्रतिदिन तादृशवाप्या तयोराराधन कार्यम् ।

श्रीनिवासभगवतस्तुलसीकुसुममाल्यादिकमपि भूदेव्यर्थं तत्रनिक्षेप्तव्यमितिच व्यवस्था कृत्वा तथैव निर्वर्तयामास । साचवापी श्रीनिवासपुष्पमाल्यनिक्षेपणेन पुष्पवापिकासंज्ञयाऽद्य विख्याता अभवत् ।

एव भगवद्यामुनमुनि कदाचित् श्रीवेंकटगिरियात्राया श्रीवेंकटगिरिनाथमङ्गलाशासन कुर्वाण कस्मिश्चिद्दिवसे प्रात श्रीमतो भोगश्रीनिवासभगवत स्नपनार्थ श्रीपापविनाशनदिव्यतीर्थात् पवित्रतम अत्यारोग्यनिदान हीरकमणिप्रभापटलमुस्वच्छ तीर्थ श्रीशैलपूर्णे वर्षोपद्रववशेन आनेतुमशक्नुवति तीर्थान्तराणि भगवद्दिव्यमङ्गलविग्रहारोग्यावहानि न भवन्तीति पर्यालोच्य भगवती श्रिय देवी शरणं प्रपद्य भगवति श्रीदेवि भवत्तीर्थमिद भगवद्दिव्यमङ्गलविग्रहारोग्यकर भवतु । इत पर श्रीपापविनाशनतीर्थमिवेदमपि भगवदभिषेकयोग्य भवत्विति प्रार्थयन् श्रीनीर्थनया पुराणप्रतिपन्ने पूर्व रङ्गदासखाने पाकशालासमीपस्थे स्वर्णकूपमशब्दिने दिव्यकूपे स्वय तीर्थमुद्धृत्य भगवदभिषेक निर्वर्तयन् इत प्रभृति सुन्दरस्य अस्मत्स्वामिन अस्यभगवत श्रीनिवासस्य अयमसाधारण कूपम्सन् सुन्दरस्वामिकूपइति तत्सञ्ज्ञया व्यवहर्तव्य ॥

अनेनैव च भगवत सर्व कार्य निर्वर्तनीयम ॥ श्रीपापविनाशनादि तीर्थानागमनेऽपिच न आराधनाभिषेकादिविलम्ब कार्य इति व्यवस्थापया मासेति कथा वृद्धैरभिवर्णितामाकर्ण्य निजपरमाचार्यशासन परमादरेण शिरशाप्रतिगृह्णन् श्रीरामानुजमुनि स्वीयानपि सर्वान् श्रीयामुनमुनिशासन यथावन्निर्वर्तनीयमिति नियम्य श्रीपापविनाशनतीर्थस्य तत्प्रतिनिधितया भगवतैव नियमितस्य गगनगगातीर्थस्य परमाचार्यनियमितस्य श्रीमत्सुन्दरस्वामिकूपस्यच त्रयाणामन्यतमस्यैव तीर्थेन भगवत श्रीनिवासस्य सर्व कार्य निर्वर्तयामास ।

भगवन्मन्दिरे अन्नपाकशालापार्श्वस्थ पुरा श्रीदेव्या पाकार्थ निर्मित कूप सप्रति सुन्दरस्वामिसञ्ज्ञया व्यवह्रियमाण सुवर्णकूपापराभिधान एक, चम्पकप्रदक्षिणे इशानदिग्भागे पुष्पमण्डपसमीपे भक्ष्यपाकशालापार्श्ववर्ती पुरा पाकार्थ भूदेव्या निर्मित सप्रति पुष्पवापिकाख्योऽपर कूपश्चेत्येतावुभौ कूपौ श्रीतीर्थभूतीर्थरूपौ प्राक्कचिदनभिव्यक्तौ पश्चाद्रङ्गदासेन पुष्पवनपालनार्थ

कूपखननमुखेनोद्भावितौ पश्चात् तोण्डमान् नृपरूपेणाविर्भूतेन तेनैव सम्यङ्निबद्धाङ्गौविराजेते ।

उक्तंहि वाराहपुराणद्वितीयभागे नवमाध्याये —

एवं दृष्ट्वा श्रीनिवासं विस्मितो रङ्गदासकः ।
अस्य देवस्यचारामं करिष्यामीत्यचिन्तयत् ॥ इत्यारभ्य
मल्लिकाकरवीराब्ज कुन्दमन्दारमालती ।
तुलसीचम्पकानां तु वनान्येव चकारह ॥
खनित्वा तत्रकूपौ द्वौ वर्धयंस्तज्जलैर्वनम् ।
आरामपुष्पाण्यादाय स्वयं दामान्यथाऽकरोत् ॥

इत्यन्तेन स्वामिपुष्करिणीतीरे अद्य विद्यमानभगवद्दिव्यालयस्थाने पुष्पारामकरणपूर्वकं रङ्गदासेन कूपद्वयं कृतमिति ।

भविष्योत्तरपुराणेऽपि त्रयोदशाध्याये—

ताम्रपत्रैः सुसंबद्धं स्वर्णालंकारमण्डितम् ।
श्रीतीर्थमन्त्रशालाग्रे भूतीर्थं भूमिपालक ॥
त्वया विनिर्मितं पूर्वं तोण्डमानमहीपते ।
तदद्य कुरु शोभाढ्यं शिलाबन्धनपूर्वकम् ॥ इति ।
तदा त्वया कृतावेतौ कूपावारामकारणात् ।
इति ते कथितं पूर्वं जन्मकर्म समुद्भवम् ॥
गोविन्दवचनं श्रुत्वा तोण्डमान् राजसत्तम ।
कूपौ संशोधयामास स्वकृतौ पूर्वजन्मनि ॥ इति चोक्तम् ॥

ब्रह्मपुराणेच सप्तमाध्याये—

वल्मीकस्यान्तरे विष्णोः प्रतिमा वर्तते शुभा ।
जानुमात्रे निमग्नाहि तिन्त्रिणीवृक्षमूलतः ॥
धनुर्द्वयान्तरे पुण्यं भूतीर्थं वर्तते शुभम् ।
पाकार्थं देवदेवस्य भूम्यावै निर्मितं पुरा ॥

तत्राग्ने गोतमी धेनु सिञ्चन्ती पयसा विभुम् ।
चिञ्चावृक्षस्य वायव्ये भूतीर्थे वासमीयुषी ॥ इति ।
भूस्वामिपुष्करिण्योश्च मध्ये क्रीडास्पदं हरे ।
पुष्पोद्यानं चकारासौ शूद्रो भागवतोत्तम ॥ इतिचोक्तम्

**अथ अस्वप्न चिञ्चाचम्पकतरुवृत्तान्त उच्यते ।**

वाराहपुराणद्वितीयभागे नवमाध्याये - -

वनमध्ये तरोर्मूले स्वामिपुष्करिणीतटे ।
तिष्ठन्तं पुण्डरीकाक्षं श्रीभूमिसहितं हरिम् ॥
आकाशस्थ मदद्रशं पीतनीलाकृतिं शुभम् ॥

इति वचनेन —

स्नात्वा तत्र विधानेन राज्ञासह निषादप ।
दर्शयामास देवेशं राजस्तस्य महात्मन ॥
स्वामिपुष्करिणीतीरे तिन्तृणीवृक्ष मूलगम् । इति वचनेन ।

ब्राह्मपुराणे सप्तमाध्याये –

पुष्पोद्यानकरः शूद्रः पूजकश्च द्विजोत्तम ।
प्रविष्टौ वेङ्कटं शैलमुभावन्यान्यसंगतौ ॥
स्वामिपुष्करिणीं पुण्यां जग्मतुश्च शनैश्शनैः ।
तत्र स्नात्वा विधानेन हरिं व्यचिनुतां तदा ॥
विचिन्वतो स्तयोस्तत्र स्वामिपुष्करिणीतटे ।
चिञ्चावृक्षस्य मूलेतु प्रादुरासीज्जनार्दन ॥
तिन्तृणीवृक्षमूलस्थ वल्मीकस्थ हरिपरम् ।
उद्धृत्य पश्चिमे भागे स्थापयामासतुश्च तौ ॥ इति वचनेन

भविष्योत्तरपुराणे –

इत्थं विचार्यमाणेतु स्वामिपुष्करिणीतटे ।
दक्षिणे विमलं दिव्यं वल्मीकं दृष्टवान्मुदा ॥

तिन्तृणीवृक्षमूलस्थ भगवान् जगदीश्वर ।
मत्वेद परम स्थान तत्रलीनोऽभवद्धरि ॥

इति वचनेनचोक्तरीत्या तिन्तृणीवृक्षमूले श्रीनिवासभगवति प्रादुर्भूय विराजमाने रङ्गदासो नाम कश्चित् भगवद्भक्तो दक्षिणदेशात् पूजकेन गोपीनाथनाम्ना मार्गसगतेन वैखानसद्विजोत्तमेन श्रावितस्वीयस्वप्नवृत्तान्त तेन स्वामिपुष्करिणीदक्षिणतीरे सह श्रीवेंकटाद्रिमागम्य तिन्तृणीवृक्षमूलस्थं भगवन्त दृष्ट्वा अस्य भगवतो मन्दिर किंचन निबद्धव्य उद्यानच कर्तव्यमिति चिन्तयन् तत्र भगवत्पार्श्ववर्तिन परिताव्यासदूरदीर्घविपुलमहाशाख चिञ्चावृक्ष पल्लवितकतिपयशाख कुसुमितकतिपयशाख शलाटुमयकतिपयशाख परिपक्वफलबहुलकतिपयशाख कदाचिदपि कचिदपि शाखाया लोकोपयोगिकार्यारंभविश्रान्तिलक्षणनिद्राविधुर महाछत्रवत् भगवन्त समतत आवृण्वन्तच विलोक्य विस्मितहृदय नूनमयमस्वप्न चिञ्चातरु कस्यचिद्स्वप्नस्याशभूतएव भवितुमर्हति । तत्रापि सततविततनिजफणामण्डलमयविपुलधवलातपत्रमण्डलेन भगवन सततशीतातपादि निवारणशीलस्तदन्तरङ्गपरिवारभूत श्रीमाननन्तएवायमस्वप्नचिञ्चातरु भवितुमर्हतीत्यनुसन्धाय तत चिञ्चावृक्षसमीपे नैऋत्या दिशि तथाविधलक्षणमेव चम्पकतरुच कचिद्विलोकयन् तमपि देवाशसभूतमेवानुसन्धाय अत्र समतत तरुकर्तनमन्तरेणच कथ मान्दिरमुद्यानवा निर्मातु शक्यमिति चिन्तयन् ततो भगवता मदास्थानभूतस्तिन्तृणीवृक्ष, लक्ष्म्या आस्थानभूतश्चाय चम्पकवृक्ष—अतस्तावुभो विहाय अन्यान् वृक्षादीन् छित्वा-मन्दिरमुद्यानच कर्तव्यमिति नियमितस्तथैव चकार ।

यथोक्त वराहपुराणद्वितीयभागे नवमाध्याये रङ्गदासप्रकरणे—

आस्थानचिञ्चा देवस्य रमायाश्चम्पक तरुम् ।
देवाज्ञसो वर्जयित्वा तावुभौ देवसेवितो ॥

> द्रवस्य परितो भूमौ शिलाकुड्य तथाऽकरोत् ।
> वासस्थान चकाराशु दारुभिस्सुमनोहरै ॥
> तत्कुड्यस्यैव परित पुष्पारामाश्चकारह ॥ इति ।

तत्रैव दशमाध्याये तोण्डमान्चक्रवर्तिप्रकरणेऽप्युक्तम्—

> यथोक्त देवदेवेन क्षीरप्रक्षाल्नादिकम् ।
> कृत्वाप्राकारनिर्माण कर्तुमुद्योगमाययौ ॥
>
> तदानी देवदेवेन स्वयमाज्ञापितो नृप ।
> तिन्तृणीचम्पक चोभो पालयैतौ नगोत्तमो ॥
>
> ममचास्थानिकी चिञ्चा लक्ष्म्यास्थानच चम्पक ।
> नमस्कार्यो नृपैस्तौहि ऋषिदेवनरैस्सदा ॥
> सस्थाप्यैतो नृपश्रेष्ठ छेदयान्यान्नगोत्तमान् । इति ।

अत्र तिन्त्रिणाचम्पकवृक्षयो भगवतो लक्ष्म्याश्च आस्थानभूतयो 'तावुभौ देवसेविताविति' 'नमस्कार्यौ नृपैस्तौहि ऋषिदेवनरैस्सदे'-तिच सर्वदा देवादिवन्द्यत्वाभिधानात् भगवता स्वयमेव अच्छेद्यत्वा-भिधानाच्च । एतयास्तदातदासति भगवत्कैङ्कर्यविरोधे भागवतमनोर-थानुरोधेन तत्तत्कार्यानुकूलतया अपसरणशीलतया सूर्यगत्यधीन गतिविही-नसततैकरूपनिजच्छायतयाच लोकप्रसिद्धयोरस्वप्नचिञ्चाचम्पकयो ध्वज-स्तम्भाद्दूरविप्रकृष्टोत्तरदक्षिणभागयोर्यथाविधि प्रतिष्ठापितयोरवश्य प्रतिदिन-माराधन कार्यमिति व्यवस्था कृत्वा श्रीरामानुजमुनिर्नित्यमाराधन निर्वर्तया-मास ।

### "अथ कनकमयनागाभरणसंबन्धि वृत्तान्तविशेषः उच्यते"

पुराखलु वीरनरसिहदेवानाम कश्चिद्गजपति तीर्थयात्रापर सेतु-दर्शन कर्तुकाम प्रस्थिता मध्येमार्गे श्रीवेंकटाचलवैभव श्रुत्वा श्रीवेंकटाचल-मारुह्य श्रीस्वामिपुष्करिण्या स्नात्वा श्रीज्ञानवराह भगवन्त प्रणम्य सेवाक्रमेण श्रीवेंकटनृसिह श्रीवेंकटनाथच अभिवन्द्य क्षेत्रोपवासादि नियमानप्यनुति-

ष्ठन् कलौ वेङ्कटनायकप्रभावप्रकर्षंच श्रुत्वा श्रीवेंकटनाथ दिव्यचरणारविन्दयो-रतिमात्र भक्तिपरवशस्सन् श्रीवेंकटनाथदिव्यालये यत्किंचित्कैंकर्य कर्तव्यमिति मनोरथ कुर्वाण किंनुवा कैंकर्यमत्र कर्तुमुचितमिति तत्रत्यविद्वज्जनान् पप्रच्छ। ततश्च विद्वज्जना ।

भूषणाना किरीटश्च वाहनाना परो रथ ।
गोपुराणा विमानश्च रत्नाना वज्रमुत्तमम् ॥
वर्णाना ब्राह्मण श्रेष्ठ आश्रमाणा तथा यति ॥

इत्यागमशास्त्रोक्तेषु यत्ते मनसे रोचते तत्कुरुष्वेति गजपति-मवादिषु । ततश्च स गजपति अस्मिन् दिव्यक्षेत्रे श्रीवेङ्कटनाथवैभवानुगुण गोपुर नविद्यते अतोऽत्र श्रीवेङ्कटनाथदिव्यवैभवानुगुण महोन्नत गोपुर निबध्नी-यामिति चिन्तयन् तदर्थं बहुद्रव्य बहून्मनुजाश्च दत्वा गोपुरारम्भ चकृत्वा पुनरागच्छामि कार्य निर्विघ्न निर्वर्तयेनामिति व्यवस्थाप्य श्रीकाञ्चीश्रीरङ्गादि दिव्यदेशेषु भगवन्तमभिवन्दमान सेतुमपिदृष्ट्वा प्रतिनिवृत्त पुन श्रीवेङ्कटा-चलमारुह्य अर्धनिबद्धगोपुरंच दृष्ट्वा सन्तुष्टस्सन् दानादिधर्मैस्तत्रत्यान् जनाश्च बहुधा सन्तोषयन् कञ्चित्काल तत्र तस्थौ ।

तदानीं तस्य गजपते कदाचिद्रात्र्या स्वप्ने कश्चन सर्पराजस्सम्मुख-मागत्य भो गजपते अय श्रीशैलो मामकीन शरीर । अत्र महोन्नतस्य कस्य-चिद्गोपुरस्य बन्धन मम महते भाराय कल्पते । ततश्च महती पीडा मे सञ्जाता ।

सैषा भवत्कल्पिता पीडा मम स्वामिसन्निधि गत्वैव मया यापयितु शक्या नान्यथेत्यभिधाय भगवद्दिव्यालयं गत्वा भगवतो वैकुण्ठ[स्य]हस्त वेष्टयामास । ततदृशस् स्वप्न दृष्ट्वा भीतभीतस्सवीरनरसिंहदेवोनाम गजपति विद्वज्जनानाहूय स्वप्नवृत्तान्त कृत्स्नमपि विज्ञाप्य तस्यैतस्य स्वप्नस्य कि तात्पर्यमिति तान् पप्रच्छ ।

ततश्च ते विद्वज्जना भो राजन् अय श्रीशैल श्रीशेषावतारभूतइति श्रीवेङ्कटाचलमाहात्म्यपरेषु पुराणभागेषु बहुधा उद्घुष्यतएव । भवदीयस्वप्नपर्या-

लोचनेच भवताऽत्र गोपुरबन्धनमादिशेषस्य भारविशेषहेतुत्वेन पीडाकरतया तदनभिमतमित्येव प्रतीयते । ततश्च गुरुतरभारायमाणस्य महोन्नतस्य गोपुरस्यात्र निबन्धन नकर्तव्यमित्येव स्वप्नतात्पर्यमिति गजपति प्रत्यब्रुवन् ।

ततस्सराजापि भृशभीतो गोपुरबन्धन तावतैव परिसमाप्य श्रीवेंकटनाथस्य गोपुरनिबन्धनकैंकर्य मेतावदेवाभिप्रेतमित्यनुसदधान प्रसक्तादिशेषापचारपरिहाराय तदाकारमेक दिव्याभरण भगवतस्समर्पणीयमित्यभ्यर्थयन्निदधो ।

तदनु नागाकारं तद्दिव्याभरण राज्ञा समर्पित दृष्ट्वा भगवत्परिजना इद कुत्रवा भगवतो धारणीयम्

किंच नागाकारमिदमाभरण देवतान्तरलक्षणभूत भगवतो धारयितुमुचितवा नवेति शङ्किताना ततो भगवता कंचित्पुरुषमाविश्य सो परिजना पुराकिल शेषमारुतसवादे शेषाचलस्येहानयनार्थ मया मारुते किंचित्पक्षपात आश्रिते खिन्नमना शेषो गतमद अस्मिन् स्वावतारभूते शैले दिव्य वर्षसहस्र महाघोर तपश्चरित्वा मामिह स्वयमेव आवाहयन् तल्परूपेणेव शैलरूपेणापि मामुद्वहन् मदीय निरतिशयप्रीतिभाजनीभूता वर्तत ॥

तमेन पुरा मयेव किंचित्खेद नीत पित्राखिन्न पुत्रमिव पाणिभ्यामेव धारयन्नुपलालयामि ।

सर्वदेश सर्वकाल सर्वावस्थोचिताशेषशेषवृत्त्यैकनिरत विशेषतश्चास्मिन् क्षेत्रे सर्वात्मना परिचरणपरायण: मदन्तरङ्गकिकरो मम निरतिशयप्रियोह्यसो शेष । अतस्तदाकारमिद नागाभरण पाणावेव धार्यतामिति नियमिता भगवत श्रीवैकुण्ठ[स्य]हस्ते तद्दिव्याभरण धारयामासु । शेषमारुतसवादे भगवत शेषाचलानयनकौतुकिनो मारुतपक्षपातित्व तत किंचित्खेदमापन्नस्य शेषस्य भगवन्तमुद्दिश्य घोरतपश्चर्याकरत्वं शेषाचले भगवदाविर्भावहेतुत्व भगवन्निरतिशयप्रीतिभाजनत्वच पुराणसिद्धमेवावगम्यते । यथोक्त ब्राह्मपुराणे शेषमारुतसवादे प्रथमाध्याये --

एववृत्ते विवादेतु तत्रागाद्धरिरीश्वरः ।
किमेतदिति तौ पृष्ट्वा शेषेणोक्तोऽतिविस्तरात् ॥
प्राहोद्वृत्त तदा शेष भाविकार्य स चिन्तयन् ।

श्रीभगवान्—

लोकान्तरात्मा बलदेवता य
प्राणो ममापि ह्यधिको मतोऽयम् ।
त्वलोकभर्तेति महान्मदस्ते
तथापि वै कर्मवरोहि बाढा ॥

इति भगवतो वायो पक्षपातित्वमभिहितम् ।

तत्रैव द्वितीयाध्याये—

शेषो गतमद पश्चात्तस्मिन्नेव नगोत्तमे ।
वायव्ये स्वामिसरसो नागतीर्थे मनोरमे ॥
नानामानुसमाकीर्णे नानापादपमण्डिते ।
उत्तरे शिखरे पुण्ये सान्निध्यार्थं जगत्पते ।
तपस्तप महाघोर दिव्य वर्षसहस्रकम् ॥
तपसा तोषितो देव प्रत्यक्ष समजायत ।
वर वरय भद्रेति तेनोक्त शेष आह तम् ॥

शेष ॥

यदि प्रसन्नो भगवन् इदमे देहि भो वरम् ।
यथा शेषे मदङ्के त्व वैकुण्ठे भुवनोत्तमे ॥
शैलाकारेच मद्देहे नित्यमत्र वस प्रभो ॥

इति शेषेण चोक्तस्सन् भगवान् प्रत्युवाचह ॥

पुरा विचारित स्थान भूमौ क्रीडास्पद शुभम् ॥ इत्यादिना
‘एतस्मिन्नन्तरे वायोस्तवसवादहेतुक ।
गिरिरत्रागत पुण्यस्त्वयापि तपसार्थित ॥

इष्टमे प्रार्थित पूर्व तथास्त्विति वर ददौ ।
तेन विष्णु समायातो हित्वा वैकुण्ठमुत्तमम् ॥
स्वामिपुष्करिणीतीरे रमया सह मोदते ॥

इत्यन्तेन वायुपक्षपातमूलखेदमात्त्वतदधीन घोरतपश्चर्याकरत्व तद-धीनभगवदाविर्भावहेतुत्वानि शेषस्याभिहितानि । यथोक्तरीत्या शेषमारुत-सवादवृत्तान्तो भविष्योत्तरपुराणप्रथमाध्यायेऽपि द्रष्टव्य ॥

ब्रह्माण्डपुराण द्वितीयाध्यायेच—

अथाह भगवाञ्छेषमाहूय पुरत स्थितम ।
मेघगभीरया वाचा हर्षोत्फुल्लविलोचन ॥

श्रीभगवान्—

अनन्त मत्प्रियो लोके नत्वदन्योऽस्ति कश्चन ।
तस्मान्मम प्रिय किंचित्कर्तव्य भवतानघ ॥

श्रुतंहि भवता सर्व नारदोदीरित वच ।
क्रीडासमुचिते देशे वस्तव्यमिति मेमति ॥

तत्र भूत्वा गिरिवरो भवान् वसतु भूतले ।
त्वत्फणामण्डलभुवि स्थातव्य रमया सह ॥

इत्यादिना शेषस्य भगवन्निरतिशयप्रीतिभाजनत्व तदधीनगिरिरूपा-वतीर्णत्वादिकमुक्तम् ।

एव वीरनरसिहदेवनामक गजपतिमहाराजकालप्रभृति श्रीरामानुज-मुनिकालपर्यन्त यथोक्तहेतुना ध्रियमाणैकहस्तनागाभरणमेव विराजमान भगवन्त श्रीनिवास वन्दमान श्रीरामानुजमुनि नागाभरणधारणहेतुभूता वीर-नरसिहदेवनामक गजपतिमहाराजकथाच वृद्धजनकथिता श्रुत्वा श्रीशेषाचले-शस्य भगवत श्रीनिवासस्य विशेषत शेषप्रियत्वस्य पुराणप्रतिपन्नतया तद-धीनार्वाचीनचरित्राणामपि तदुत्तमकतया च शेषाकारदिव्याभरणधारण उभयोरेव-हस्तयोरुचित एकत्राधारणमनुचित शोभाहानिकरच ।

अतएवहि पुरा भगवत श्रीनिवासस्य शेषप्रियत्व विज्ञाय पद्मावती-परिणयकाले दिव्यभूषणानि प्रदिशता आकाशमहाराजेन हस्तद्वयधारणयोग्य नागाभरणयुग्ममेव समर्पित नत्वेकम् । यथोक्त भविष्योत्तरपुराणैकाद-शाध्याये —

'नागभूषणयुग्मच बाहुपूरादिकास्तथा' । इति । भगवतोऽस्य शेषप्रियत्वच 'अनन्तमत्प्रियो लोके न त्वदन्योऽस्ति कश्चन' इति ब्रह्माण्डपुराणभाग-द्वितीयाध्यायस्थ भगवद्वचनेन,

शेषे शयनशीलस्य शेषाचलनिवासिन ।
सदा शेषप्रियस्यास्य श्रीनिवासस्य शार्ङ्गिण ॥

द्वितीयदिवसे चास्य भूयोऽभच्छेषवाहनम् । इति भविष्योत्तरपुराण-भाग चतुर्दशाध्यायवचनेन पुराणप्रतिपन्नै चरित्रान्तरैश्च प्रस्फुटमवगम्यते । पूर्वमाकाशराजेन शेषप्रियस्यास्य भगवतो भावज्ञेन समर्पित शेषाकारभूषणद्वय कालवशात्प्रमुषितमिति व्याजान्तरेण सप्रति कथचिदेक भगवतैव सपादितम् । अपरतु न्यून तिष्ठति तस्माद्धस्तान्तरस्यापि नागभूषणान्तर समर्पणीयमेवेत्य-भिदधानो हस्तान्तरस्यापि शेषाकारभूषणान्तर स्वयमेव समर्प्य ते उभे अपि नागाभरणे शोभाविशेषजननाय अङ्गदाभ्यामेकीकृत्य आश्रितजननयनमनो-हारितया समर्पयामास ।

## अथ भगवद्विद्यालयस्थ श्रीनृसिंहभगवद्वृत्तान्त उच्यते ।

पुण्ये स्वामिसरस्तीरे पश्चिमे नृहरि हरिम् ।
भक्त्या परमया युक्त पूजयामास शकर ॥

इति स्कान्दपुराणभागान्तर्गत सुवर्णमुखरीमाहात्म्यवचनेन

'नीलकण्ठस्तु तत्तीरे ध्यायन् नृहरिमादरात् ।
उमयासह विश्वेश कचित्कालमुवास ह' ॥

इति वामनपुराणवचनेन 'सद्भक्तनीलकण्ठार्च्यनृसिहाय नमोनम' । इति वाराहपुराणप्रथमभागस्थैकषष्टितमाङ्कचिह्नितैकोनत्रिशाध्यायाष्टोत्तरशतनामा-

वलीघटकवचनेनच, स्वामिपुष्करिणीपश्चिमतीरे कंचित्कालं तपश्चर्यां कुर्वतो महादेवस्य प्रत्यक्षविषयतया प्रतिपन्नस्य नृसिंहभगवतः स्वामिपुष्करिणीपश्चिमतीरएव कस्मिंश्चिन्मन्दिरे श्रीवैखानसशास्त्रविधानेनैव समाराध्यमानस्य महादेवतपश्चर्याफलतया प्रादुर्भूतत्वाभिमानेन तत्साहचर्येण महादेवस्यापि इहप्रतिष्ठापनं कर्तव्यमिति पुरा कदाचित् शैवजनेषु विवदमानेषु तदानीं स्थलवासिभिः वैष्णवैः राजसभां गतैः अथ श्रीवेंकटाचलः श्रीवैकुण्ठादानीतः अप्राकृतः श्रीविष्णोः क्रीडाचल इति श्रीवेंकटाचलमाहात्म्यपरपुराणेषु समततः उद्घुष्यते ।

ईदृशाप्राकृत श्रीविष्णुक्षेत्रे शिवप्रतिष्ठा अनुचितेति प्रमाणोपन्यासपूर्वकं प्रतिपादयद्भिः कथंचिताद्दृशोद्यमान्निवर्तितेषु तदानीं सर्वे तत्रत्यश्रीवैष्णवा अयं नृसिंहदेवो लक्ष्मीवियुक्तो महोग्ररूपः तदातदा शैवजनोपद्रवप्रसंगहेतुभूतश्च वर्तते । तस्मादयं इतः परं यथापूर्वं प्रसिद्धतरमाराध्यमानश्चेत् महाकलियुगेऽस्मिन् यथाविध्याराधनमपि न निर्वर्तिष्यते । यत्किंचिदशलापेचाप्यस्य देवस्य नगरविदाहनहेतुर्दिव्यलोचनमहोग्रदृष्टिवेगो नोपशास्यति । यथोक्तरीत्या शैवजनानामुपद्रवप्रसंगाऽप्यवर्जनीयएव स्यात् ।

अत अस्य आराधनादिकं संक्षेप्तव्यमिति पर्यालोच्य आराधनमेव लोपयामासुरिति कथां वृद्धजनसकथितामाकर्ण्य श्रीरामानुजमुनिः पुराणसिद्धस्य दिव्यसूरिदिव्यसूक्तिविषयस्य ' सद्भक्तनीलकण्ठार्च्यनृसिंहाय नमोनमः ' इति श्रीवेंकटनाथाष्टोत्तरशतनामावल्यां पठनेन वेरान्तरवत् श्रीनिवासेन सहप्रतिपन्नैकवस्तुभावस्य क्षेत्राधिपतेरस्य श्रीनृसिंहदेवस्य समाराधनविलोपः क्षेत्राभ्युदयहानिकरइति परिचिन्तयन् अस्य देवस्य स्वामिपुष्करिणीपश्चिमतीरे पृथगालये सत्येव यथोक्तरीत्या शैवजनोपद्रवप्रसंगस्यावकाशः श्रीवेंकटनाथदिव्यालयएव कचिदस्य स्थानकल्पनेतु नैतत्प्रसङ्गावकाशः । श्रीमदानन्दनिलयदिव्यविमानाभिमुखएवाय प्रतिष्ठापितश्चेदस्य उग्रदृष्टिवेगः सत्यपि कदाचित् किंचिदाराधनसंकोचे स्वयमेवप्रशान्तः सन् न किंचित्करो भविष्यतीत्यभिदधानः श्रीवेंकटनाथदिव्यालयएव ईशानदिग्भागे श्रीमदानन्दनिलयदिव्यविमाना-

भिमुखदृष्टिमेन श्रीनृसिंहदेवं प्रतिष्ठाप्य श्रीनृसिंहदेवार्चनस्थले पराभिभवो नायातीति शास्त्रार्थमपि हृदि कुर्वन् यथाविधि नित्यमाराधनं निर्वर्तयामास ॥

## अथ श्रीवेंकटाचलमार्गमध्यवर्ति श्रीनृसिंहवृत्तान्त उच्यते—

मार्कण्डेयपुराणभागे द्वितीयाध्याये—

आरुह्य वेंकटं शैलं मध्येमार्गं ददर्शम ।
नारसिंहगुहास्थानं लोके विख्यातवैभवम् ॥

लक्ष्मीनृसिंहप्रह्लाद वरदानन्दवैभव ! ।
दासानुदास देवेश मापाहि मधुसूदन ! ॥

इति प्रणम्य शुद्धेन स्वामिपुष्करिणीं गतः, इत्यत्र शुद्धाख्येन अगस्त्यशिष्येणसह श्रीवेंकटाद्रिमारोहन् तीर्थयात्रापरस्य श्रीमार्कण्डेयमहामुनेः पर्वतमार्गमध्ये श्रीनारसिंहगुहास्थाने श्रीलक्ष्मीनृसिंहः प्रत्यक्षविषय समपद्यत । तच्च लक्ष्मीनृसिंहं अभिवन्द्यैव समहामुनिः ततः स्वामिपुष्करिणीगतइत्यभिधानेन तादृशस्थानविशेषदर्शिनविशेषचरित्रप्रत्यभिज्ञानाय श्रीलक्ष्मीनृसिंहस्थानं कल्पनीयमिति रामानुजमुनिः पर्यालोच्य तत्र पुराणोक्तरीत्या लक्ष्मीनृसिंहं प्रतिष्ठाप्य नित्यमाराधनं निर्वर्तयामास ।

## अथ श्रीवेंकटनाथचुबुकसमर्प्यमाणघनसारचूर्णदिव्यालयगोपुरद्वारनिबद्ध लोहखनित्रसंबन्धि वृत्तान्तः उच्यते—

श्रीरामानुजमुनिना श्रीवेंकटनाथकैंकर्याय चोदिते अनन्तार्ये महत्या श्रद्धया अनितरसापेक्षमेवैदकैंकर्यं निर्वर्तनीयमित्यध्यवस्य कठारगर्भयाऽपि निजदेव्यासहैव पुष्पारामार्थं स्वयमेव खनित्रमादाय तटाकं [तडागं] खनति मृद्भारमृद्भा गच्छन्त्या देव्या श्रममसहमानस्य स्वयंतद्भारमादाय गच्छतः श्रीनिवासस्य व्यापारं स्वान्येतरनिरपेक्षनिर्वर्तनीयनामनोरथविरोधिनं मत्वा कुपितेन अनन्तार्येण खनित्रेण श्रीवेंकटनाथस्य चुबुकदेशे प्रहारे कृते पश्चात् दिव्यालये चुबुकगलद्रुधिरधारं भगवन्तमालोक्य चकितमानसे अन-

न्तार्ये अहो एषएव भगवान् वेषान्तरेण मा तथा व्यमोहयत् इति परिचिन्त्य तत्क्षणे चुबुकव्रणे विषमच्छदपुष्पधूलि निधाय भगवन्तमपराध क्षामयति । ततश्च भगवानाश्रितवात्सल्यजलधि श्रीनिवास अनन्तार्यकैंकर्यश्रद्धाभूमानम-भिवीक्ष्य सतुष्टस्सन् भो अनन्तार्य कैंकर्यश्रद्धाभूमशालिना भवता खनित्रेण कृतोऽय मदीयचुबुकगतव्रण किणीभूत सन् सुचिर मम वक्षस श्रीवत्स इव वदनमण्डलस्यापि एक सुभगतम लाछन भविष्यति । त्वमत्र मा शोक कृथा इति तपरिसान्त्वयन् इत प्रभृति ईदृशवृत्तान्तप्रत्यभिज्ञानाय मदीयचुबुके सुगन्धिघनसारचूर्ण सर्वदा समर्पणीय, येनच खनित्रेण ममाय व्रण उदपादि तदेतत्सकलजनसदर्शनयोग्ये मदीयालयगोपुरे क्वचिदुत्तुङ्गप्रदेशे स्थापनीयमिति स्वयमेव व्यवस्थामारचयामास ॥

तत प्रभृति सदा प्रतिदिनमागवनरामये भगवत श्रीनिवासस्य चुबुके सुगन्धि घनसारचूर्ण समर्प्यते । तदेतत्खनित्रमपि ततएवहेतो श्रीवेंकटनाथदिव्यालयगोपुरे निबद्ध सकलमनुजनयनदृश्य समिन्वे ।

**अथ श्रीवेंकटनाथस्य श्रीकन्यामासमहोत्सवे सप्तमदिनसाय-न्तनोद्यानविहारोत्सवे क्रियमाणाप्रदक्षिणयात्रायाः अष्टमदिनप्रातस्त्य-रथोत्सवयात्रायां क्रियमाणानन्तार्यजामातृभावव्यवहारस्य हेतुभूतो वृत्तान्तः उच्यते ।**

श्रीरामानुजमुनिचोदिते अनन्तार्ये श्रीवेंकटाद्रौ विपुलतम नन्दनवन तदाधारं तटाकं च [तडागच] निर्माय निरवधिकपुष्पमालासमर्पणकैंकर्येण भगवन्त श्रीवेंकटनाथमानन्दयति सभगवान् श्रीनिवास परमकारुणिक आश्रितवात्सल्यैकजलधि स्वाश्रितस्यानन्तार्यस्य निरवधिकपुष्पकैंकर्य निरति-शयप्रीत्या स्वात्मना परिगृहीतमित्यश तदीयनिरतिशयकैंकर्य श्रद्धागर्भभाव-शुद्धिच सर्वेषा प्रकाशयितुकाम कदाचित्स्वयपरिगृहीतराजकुमारवेष तथाविधवेषशालिन्या निजमहिष्या श्रीपद्मावतीदेव्यासह रजनीषु तदीय पुष्पाराम प्रविश्य स्वैरविहारकुर्वन् पुष्पपल्लवफलाद्यपचयेन तदुद्यान व्याकूली-चकार ।

तदनु रजनीषु क्रियमाणां पुष्पोद्यानवैयाकुलीं अनन्तार्य आलोक्य कोनुवा चोर इत्थं कदर्थयति भगवदुद्यानमिति व्याकुलमनाः स्वयदत्तावधानोऽपि चोरमलभमानः, इत्थमष्टसु दिनेषु गतेषु नवमदिनरात्र्यां कृपयैव हस्तवशगतौ राजदम्पतीविपच्छन्नौ श्रीपद्मावतीश्रीनिवासौ लतापाशेनकचनतरौ बद्धुमाकर्षन् कथंचिद्धस्तो विमोच्य भगवति मृगकातरभावमापन्ने तदनु धाविते द्रुततरमप्रदक्षिणमेव वार्थी परिक्रम्य निजमन्दिरप्रति पलायिते तदनु पलायितुमशक्नुवन्तीं राजमहिषीवेषां पद्मावतीं कुत्रचित् चम्पकतरौ निबध्य भर्त्सयन् तदीयवृत्तान्तं कृत्स्नमपि पृच्छन् आप्रभातं सावधानं पार्श्वेएव तस्थौ ॥

सापि पद्मावतीदेवी भो अनन्तार्य त्वं मत्पतिं त्वगृहाण नारीमनपराधिनीं मुञ्च अहं ते पुत्रीभवामि इति प्रार्थयन्ती तस्थौ ।

ततः प्रातःकाले सर्वेषु परिजनेषु भगवन्मन्दिरमागत्य भगवद्वक्षसि कण्ठिकालयां पद्मावतीदेवीमवीक्षमाणेषु अर्चकान्निर्विण्णत्सु भगवदाविष्टेन केनचित्पुरुषेण यथावत्ज्ञापितवृत्तान्तेषु भगवदाज्ञया देवीमनन्तार्यचानेतु उद्यानमागतेषु विदितवृत्तान्तोऽनन्तार्यं देवीं चम्पकतरुबन्धनाद्विमोच्य क्षामयित्वा कृतनित्यकृत्य प्रागुक्तनिजवाचं सत्यां चिकीर्षु परिगृहीतपुत्रिकाभावां परिणययोग्यकन्यकादशापन्नां भगवतीं पद्मावतीं पुष्पपिटकयासह कक्षे बिभ्राणो भगवदुपकण्ठमागम्य भगवन्तं क्षामयन् देवीमर्पयामास ।

सच भगवान् निजाकाञ्चनमालां अनन्तार्यकण्ठे प्रीत्या अर्पयन् देवीं प्रतिजग्राह । तदनु पश्यत्सु सर्वेषु सादेवी भगवतो वक्षसि कण्ठिकायामेव यथापुरं परिगृहीतरूपा तस्थौ ।

तामिमां कथां शृण्वन् श्रीरामानुजमुनिः विदितपूर्वकथावृत्तान्तं श्रीनिवासस्य अनन्तार्ये अभिमानातिशयं विदित्वा प्राग्भगवत्कृततदीयचरित्रविशेषप्रत्यभिज्ञापकव्यवस्थाविशेषवत् स्वयमप्येतत्कथाप्रत्यभिज्ञानाय व्यवस्थामित्थमारचयामास ॥ इतः प्रभृति प्रतिवर्षं श्रीकन्यामासब्रह्मोत्सवे सप्तम-

दिवसे सायन्तनोद्यानविहारोत्सवे प्राक्तनाप्रदक्षिणकान्दिशीकयात्राप्रत्यभिज्ञानाय अप्रदक्षिणमेव भगवतो यात्रा कर्तव्या । अनन्तार्याय प्राग्रीत्या तदीयनन्दनवनयात्रासु भगवतो माल्याप्यर्पणीया ।

अष्टमदिने रथोत्सवयात्रायां अनन्तार्येण जामातृभावनया भगवते श्रीनिवासाय नवीनवस्त्रसमर्पणमपि कर्तव्यमिति ।

तदा प्रभृति यथोक्तरूपा प्रक्रिया प्रतिवर्षमनुष्ठीयते ।

**अथ धनुर्मासे श्रीकृष्णभगवतो दिव्यपर्यङ्कशयनभोगनिर्वर्तनवृत्तान्त उच्यते—**

श्रीवेंकटनाथदिव्यालये प्रतिदिनं स्नपनबेरभूतस्य श्रीमत्सुन्दरस्वाम्यपरनामधेयस्य भोगश्रीनिवासभगवत एव शय्याबेरतया नित्यं दिव्यपर्यङ्कतल्पभोगलीलारसे श्रीवैखानसागमोक्तविधानेन निर्वर्त्यमाने भगवान् श्रीरामानुजमुनिः श्रीवैखानसशास्त्रे कचित्संहितायां विद्यमानं धनुर्मासे श्रीकृष्णभगवतो दिव्यपर्यङ्कशय्याभोगलीलानिर्वर्तनविधिं बेरत्रयपक्षे सर्वदैव श्रीकृष्णभगवत एव शय्याबेरतयातल्पभोगलीलानिवर्तनविधिंच दृष्ट्वा श्रीगोदादेव्या धनुर्मासे श्रीकृष्णभगवतासहैव दिव्यपर्यङ्कशय्याभोगलीलारसानुभवकाङ्क्षिण्या दिने दिने एकैकशोऽनुसन्धेयत्रिंशद्गाथात्मकश्रीव्रताख्य श्रीकृष्णविषयप्राबोधिक दिव्यप्रबन्धप्रणयनं अर्चावतारेष्वितरापेक्षया श्रीवेंकटनाथे तस्या देव्याः प्रथममादरातिशयकारणस्य गोदाश्रीसूक्ताख्य तदीयद्वितीयप्रबन्धप्रथमगाथायामेवाभिव्यक्ततां च पर्यालोच्य तदीयमनोरथानुगुण्येनविधानबलेनच श्रीवेंकटनाथ एव श्रीकृष्णरूपीसन् तस्यैव दिव्यपर्यङ्कशयनभोगलीलारसं प्रदिशतीति भावनया धनुर्मासे कृत्स्नेऽपि श्रीकृष्णभगवत एव दिव्यपर्यङ्कशयनभोगलीलारसो निर्वर्तनीयः । तदितरमासेषुतु भोगश्रीनिवासभगवतः श्रीसुन्दरस्वाम्यपरनामधेयस्य तादृशभोगलीलारसो निर्वर्तनीय इति व्यवस्थामारचयामास ॥

तदाप्रभृति धनुर्मासे श्रीकृष्णभगवत एव दिव्यपर्यङ्कशयनभोगलीलारसो निर्वर्त्यते ।

## अथ श्रीवेंकटाद्रिसमारोहण सोपानसरणीसमारम्भस्थलस्थित तिन्तृणीवृक्षमूलस्थित श्रीवेंकटनाथ दिव्यचरणारविन्दयुगलसंबन्धि वृत्तान्तउच्यते—

श्रीयामुनमुनिचोदिते श्रीशैलपूर्णार्ये श्रीवेंकटाद्रौ वास कृत्वा तिसृष्वपि सन्ध्यासु श्रीवेंकटनाथमभिवन्द्य प्रतिदिन भगवदभिषेकार्थमाकाशगंगा-तीर्थमानीय समर्प्य सतत तदायनिरवधिकैश्वर्यसमृध्यर्थ मङ्गलाशासनैकपरायणे वर्तमाने सति श्रीयामुनमुनिना परमपद गच्छता महापूर्णश्रीशैलपूर्ण-श्रीगोष्ठीपूर्ण श्रीमालाधरगुरुप्रभृतिषु रामानुजार्थे मया निविवत गोपनीया एकैकविशेषार्थाशा निक्षिप्ता । तेच यथावसर रामानुजेनाधिगन्तव्या सयदि मज्जीवितसमयएवेहागमिष्यत्, सर्वानिमानशान् मत्तएवाधिगतवान् अभविष्यत् । सचास्मदाय दैवदुर्विपाकेन मज्जीवितसमये मदुपकण्ठ नायात । सचावश्यमितोऽविलम्बेनैव कालेन श्रीविष्णुमतमधिगमिष्यति स्थापयिष्यति-च तत् सकलेतरवादिदुर्धर्षम् । तदा समयमधिगम्य मया भवत्सुनिक्षिप्ता अर्था अवश्यमेव त लभनीय इति शिष्यान् प्रत्यादिष्टेषु विशेषार्थेषु श्रीशैलपूर्णार्ये-निकटे वर्तमानान् श्रीरामायणविशेषार्थान् अधिगन्तुमागताय श्रीरामानुजमुनये स्वाचार्यनियमनमनुसदधान श्रीशैलपूर्णार्ये महाप्रीतिपुरस्सर श्रीरामायण विशेषार्थानुपादिशत । तदानी श्रीरामानुजमुनौ श्रीवेंकटाद्रेरुपरिष्टात् वासमप-चारभयादसहमाने श्रीशैलपूर्णार्येश्च स्वय स्वाचार्यनियमित श्रीवेंकटनाथ-नित्याभिषेकतीर्थानयनकैकर्य नित्यश्रीनिवास मङ्गलाशासनच विसृज्य वर्तितु-मशक्नुवन् भो रामानुजमुने प्रतिदिन श्रीरामायणपाठार्थ तव ममच समाग-मस्थल श्रीवेंकटाद्रिसमारोहणसोपानसरणिसमारम्भस्थलस्थित तिन्त्रिणीमूलगत-गण्डशैलाध प्रदेशो भवितुमर्हति । अह श्रीवेंकटाद्रौ प्रातराराधनपरिसमाप्त्य-नन्तर भगवत्प्रसादमपि गृहीत्वा तत्रागमिष्यामि तवापि दास्यामि त्वमपि श्रीपदपुरीत कृतप्रातराह्निक तत्रागच्छ । ततस्तत्र श्रीरामायणपाठो भविता । यागानुयागावपि तत्रैवचाह करिष्यामि तवापि माध्यदिननियमजाते कृत्स्ने निर्वृत्ते पुन पाठो भविता । तत सायान्तनभगवदाराधनाय श्रीवेंकटाद्रिमेवाह

गमिष्यामि त्वंच श्रीपद्मपुरीं गच्छेति व्यवस्था कृत्वा तथैव निर्वर्तयन् एक संवत्सरं श्रीरामानुजमुनिं श्रीरामायणविशेषार्थान् स्वाचार्योपदिष्टान् यथावदध्यापयामास ।

इत्थं वर्तमानः श्रीशैलपूर्णार्यः कदाचित् श्रीवेंकटनाथं सायन्तनाराधनकाले निषेव्य गृहमागत्य रात्रौ शयनकाले भगवन्तं ध्यात्वा भगवन् श्रीवेंकटनाथ श्रीनिवास भगवद्यामुनमुनिकटाक्षवशात् अद्यपर्यन्तं त्वत्रिसन्ध्यमेव सेवा प्रसादयन्नवात्सी । इदानींतु श्रीरामायणपाठनिमित्तेन माध्याह्निकाराधनसमयसेवा दुर्लभा समपद्यते इत्यनुसन्दधानः सुष्वाप । तदनुलब्धनिद्रं श्रीशैलपूर्णार्यं रात्रौ भजाने स्वप्ने भो श्रीशैलपूर्ण तव माध्याह्निकसमाराधनसेवामपि प्रादिशं त्वं शोकं माकृथा इति समुखस्थितेन श्रीवेंकटनाथेन अभिहितः सन् प्रातः प्रबुद्धो यथापुरमेव गगनगंगातीर्थादिमिषेकतीर्थमानीय समर्प्य भगवतः प्रथमाराधनसमयसेवामपि लब्ध्वा ततः श्रीरामायणपाठप्रदानाय पर्वतोपत्यकातिन्त्रिणीमूलगण्डशैलमागतस्तत्रागत्य निरीक्षमाणाय रामानुजमुनये श्रीरामायणं पाठयन्नवात्सीत । ततो मध्याह्नसमये समन्ततो मृगमदकस्तूरीघनसारकुङ्कुमकुसुमबहुलपरिमलं घुमुधुमितदशदिशौ चन्दनकुसुमतुलसीदलपटलसत्कृतौ श्रीवेंकटनाथदिव्याङ्घ्री तत्रत्यगण्डशैलोपरि प्रादुरभूताम् ।

ततश्च श्रीशैलपूर्णश्रीरामानुजमुनी समततः परस्परं तं दिव्यपरिमलं जिघ्रन्तौ किमेतदिति विचारयन्तौ सद्यः समुत्थितौ समततः पश्यन्तौ तत्रत्यगण्डशैलोपरि यथोक्तवेषौ श्रीवेंकटनाथदिव्याङ्घ्री सविस्मयं ददृशतुः । इत्थं प्रादुर्भूतौ भगवद्दिव्याङ्घ्री सपश्यन् श्रीशैलपूर्णार्यो निजस्वप्नवृत्तान्तमपि रामानुजमुनये निवेद्य तेनसह प्रहृष्टान्तरङ्गो बभूव ।

ततस्तावुभावपि सञ्जातविस्मयौ स्वयंव्यक्तं तत् दिव्याङ्घ्रियुगलं निषेव्य तदधस्तात् तस्मिन्नेव गण्डशैले तनाङ्घ्रियुगलेन एकशरीरतया दिव्यसूरीनवतार्य तत्र दिव्यालयमपि कंचिन्निर्माप्य प्रतिष्ठार्चनादिकमपि श्रीवैखानसागमोक्तविधिनैव निर्वर्त्य तीर्थप्रसादान्वयमपि कृत्वा तमपि तिन्त्रिणीवृक्ष

अस्वप्नचिह्नातरुममानवेष भगवद्दिव्याङ्घ्रिप्रादुर्भावत प्रागेव तदर्थे कृत सन्निधान भगवन्तमनन्तमेव मन्वानो तत कतिपयकालेन तद्दिव्याङ्घ्रियुगल-सन्निधावेव श्रीरामायणग्रन्थप्रवचन समापनशान्तिमपि निरवर्तयताम् ।

तत परमकारुणिको भगवान् रामानुजमुनि कलौ वेंकटनायक, इतिप्रसिद्धवैभव,

" विशेषत क्रूरकलौ नराणा पापात्मकाना परपीडकानाम् ।
भूगोलमध्ये द्रमिडे च पुण्ये श्रीवेंकटाद्रिर्गतिरेव नान्य "

इति श्रीभविष्योत्तरपुराणान्तर्गताशीतितमाङ्कचिह्नित श्रीवेंकटेशरहस्याध्यायवचनोक्त सुप्रसिद्धवैभव श्रीवेंकटाचलशिखराधिष्ठित

कलौ पुन पापरताभिभूते समुद्भवाब्धिनवत्सलत्वात् ।
अर्चात्मना सर्वजनान् सुगोप्तु विश्वाधिको वेंकटभूधरेन्द्र ॥

इत्यादि वचनोक्तरीत्या वर्णाश्रमभेदमन्तरेण सकलमनुज सरक्षणार्थ मवतीर्ण श्रीवेंकटनाथमभिवन्द्य धन्यता प्राप्तु स्वरूपयोग्यताया सर्वेष्वविशिष्टतया पञ्चमवर्णस्थभगवद्दासानामशेषाणामन्यषा च अनर्हावरवर्णजाना श्रीवेंकटाचलारोहणाधिकारायोगेन न सर्वेऽपि श्रीवेंकटाचलदक्षिणशिखरदरीस्राविब्राह्मणवर्णादिसबन्धिसुप्रसिद्धतीर्थपञ्चके चरमे चण्डालतीर्थे स्नाता शुद्धवमनास्सन्त तदिद स्वयव्यक्त श्रीवेंकटनाथदिव्याङ्घ्रियुगल सनिकृष्य निषेव्य प्रदक्षिणप्रणामादीन् कुर्वन्तो धन्यास्समुज्जीवन्त्विति व्यवस्थामारचयामास ॥

एव श्रीवेंकटगिरियात्रा कुर्वन्त सर्वेऽपिजना श्रीवाराहपुराण प्रथमभागस्य द्विषष्टितमाङ्कचिह्नित त्रिशाध्याये—

' घुष्यन्तस्सङ्घशश्चोच्चैर्गोविन्देति पुन पुन ' इति पुरा सूतमुखश्रुत श्रीवेंकटगिरिमाहात्म्याना तद्गिरियात्रार्थ प्रस्थिताना महर्षीणा भगवन्नामान्तराण्युपेक्ष्य सदा गोविन्दकीर्तनमित्युक्त श्रीगोविन्दनामधेयस्यैव उच्चैस्स्वरेण घोषणपूर्वक श्रीवेंकटगिरियात्राकरण प्रतिपादनदर्शनेन सप्रत्ययस्य श्रीवेंकटाचलस्य

मध्ये प्रसक्तदेवतान्तरसबन्धित्वप्रवादभञ्जनाय तदेव श्रीगोविन्दनामधेयमुच्चैः-स्वरेण मुहुर्मुहु घोषयन्त तेनच श्रीवेंकटाचलोऽयं श्रीविष्णुक्षेत्रमेवेति पण्डित-पामरसाधारण्येन सर्वजनेभ्य ख्यापयन्त सुदूरात् भगवत्सेवाकांक्षया समागच्छता सेवार्थ परमकरुणया गिरेरुपत्यकायामेवाविर्भूतमिद चरणार-विन्दद्वय निषेव्यैव श्रीवेंकटाचल समारोहन्तु भगवत्सेवार्थमितिच व्यवस्था स' रामानुजमुनिश्चकार ॥

## अथ श्रीवेंकटनाथदिव्यालये विराजमानस्य श्रीसीतालक्ष्मण हनुमत्सुग्रीवाङ्गदसमेतस्य श्रीरामचन्द्रस्य संबन्धी वृत्तान्तः उच्यते ॥

पुराखलु ।

'कृतमालानदीतीरे विश्वभरक्रने हरि ।
आविरासीद्रघुवरो विभीषणभयापह ॥'

इति वासिष्ठरामायणोक्तरीत्या कृतमालाख्यनदीतीरे दक्षिणमधुरानगरीत प्रतीच्या दिशि कलविकावतारनाम्नि नगरे विश्वभरनामनि महामुनौ श्रीरामस्य 'आनयैन हरिश्रेष्ठ दत्तमस्याभय मया' इत्युक्त श्रीविभीष-णाभयप्रदान चरित्रश्रवणविद्धहृदये श्रीविभीषणाभयप्रदानसमयसनिवेशविशेष-विशिष्ट श्रीराम साक्षात्कर्तु तमुद्दिश्य तपश्चर्या कुर्वाणे सति सभग-वान् श्रीराम तस्मिन्महामुनावाश्रिते कृपापरवशः कदाचित्स्वप्ने तस्मै स्वात्मान लक्ष्मणच उभौ धनुर्धरौ स्वनिकटे 'विभीषणक्रने सर्व विज्ञाप्य हरिपुगव । यथेष्ट कुरु राजेन्द्रेत्युच्चरन्नञ्जलि व्यधात्, इत्युक्तरीत्या सुग्रीव-महाराज श्रीविभीषणार्थ वक्तव्यान्युचितवाक्यानि विज्ञाप्य मया विज्ञापनीय विज्ञापितम् इत पर यथामनोरथ त्व कर्तुमर्हसीत्यभिधाय अञ्जलिहस्त अन्तिके स्थित्वा मेवमान हनूमन्तंच विभीषणपरिग्रहार्थ सएषदेश. कालश्चे-त्यादीनि समुचितवचनानि संनिकृष्याभिदधान तिष्ठन्त अङ्गदच 'वालिसूनु-र्महातेजा विभीषणमुपस्थितम् ।' दर्शयन्तं तदाकाशे निर्दिश्योद्धृतपाणिना, इत्युक्तरीत्या खस्थविभीषणमङ्गुल्या निर्दिश्य प्रदर्शयन्तच स्थितं दर्शयन् वासिष्ठरामायणोक्त यथोक्तवेषानिमान् सर्वान् सम्यक् साक्षात्कारयामास ॥

स विश्वंभरो महामुनि इत्थं स्वप्ने स्वमनोरथानुगुणसंनिवेशविशेष परिजनविशिष्ट श्रीराम स्वेनैव कृपया प्रदर्शित सपरिवारम् साक्षात्कुर्वन् प्रबुद्ध तस्मिन् स्थानविशेषे तथाविधपरिजनविशिष्ट श्रीराममर्चारूपेणावतार्य समाराधयन् अभिमता सिद्धिमलभत । तत प्रभृति तस्मिन् स्थले समाराध्यमाने यथोक्तपरिवारसमेते श्रीरामे कदाचित् तस्मिन् कलविकावतारनगरे-कस्मिश्चिन्महाकलहे प्रसक्ते कस्मैचिद्भक्ताय भो मामद्य श्रीवेङ्कटाद्रिं सपरिवार नयेति स्वप्न प्रदिशति सच भक्तस्त सपरिवारमेव नयन् श्रीवेङ्कटाद्रेरुपत्यकाया तिन्त्रिणीवृक्षमूलस्थ गण्डशैलसन्निधौ श्रीरामायणप्रवचनपरायणयो श्रीशैलपूर्ण-श्रीरामानुजमुन्यो तदनी श्रीविभीषणाभयप्रदानघट्ट विचारयतोस्सविध निनाय । तौच श्रीशैलपूर्णश्रीरामानुजमुनी अचिन्तितमागताम्तान् श्रीरामलक्ष्मण सुग्रीवहनुमदङ्गदान् श्रीविभीषणाभयप्रदानदशासमुचितवेषानभिवीक्षमाणौ तेषामस्थानागमनकारणादिवृत्तान्तमपि श्रुतवन्तो भृशसन्तुष्टो नूनमेते यथा पुरा विभीषणमभयप्रदानेनानुजगृहु तथैव तदभयप्रदानघट्टमेव विचारयतोरावयो अप्यभयप्रदानमेव चिकीर्षवस्तदनुगुणलक्षणास्समायाता इत्यनुसन्दधानौ तस्यैतस्य श्रीविभीषणाभयप्रदानकारिण श्रीरामस्य पुरा रावणभवनागत-श्रीजानक्या समावेशवदिहापि श्रीजानक्या समावेशस्सम्पादनीय इति मन्वानो श्रीमती जानकीदेवी अर्चारूपेण शुभदिने शोभनमुहूर्ते अवतार्य यथाविधि सर्वाश्चैतान् श्रीवैखानसागमोक्तविधानेन सम्प्रोक्ष्य श्रीजानकीश्रीरामयो यथाविधि विवाहमङ्गलोत्सवमपि निर्वर्त्य मङ्गलाशासनेन तदीयसतताराधनाभिवृद्धि आशासानौ—

> मथितं दुग्धाम्भोनिधिमतिशय्य च कालनेमिमुत्तीर्य ।
> क्षुभितेन्द्रयनुजसहायी भवितु समुपेत्य राघवीभूय ॥
>
> निबिडान् सप्तच वृक्षान्बिध्वा बाणेन वेङ्कट गन्तु ।
> पत्यु पादावेवप्राप्य प्रतिवासर समाश्वसते ॥

इत्येवमर्था श्रीमच्छन्दोवृत्ताख्य श्रीभक्तिसारदिव्यसूरिसहितास्थैकाशीतितमगाथा सत्यां चिकीर्षन् श्रीवेङ्कटाद्रौ श्रीश्रीनिवासभगवद्दिव्यालयएव तान्वि-

राजमानान् कृत्वा प्रतिवर्षमेनयोरेत विवाहमङ्गलोत्सव श्रीरामनवमीसमनन्तर-
दिवमे विधातव्यं व्यवस्थाप्य नित्याराधनच निर्वर्तयामासतु ।

**अथ श्रीवराहभगवत्सबन्धि वृत्तान्त उच्यते ॥**

पाद्मपुराणभागस्थैकोनत्रिशाङ्कचिह्नित षष्ठाध्याये—

गोक्षीरैर्हेमकुम्भस्थै र्वल्मीकविवरोदरम् ।
अनुस्यूताच्छिन्नधारै रभिषेक्तु प्रचक्रमे ॥

क्रियमाणेऽभिषेकेतु वल्मीकविवरान्तरात् ।
आविर्बभूव भगवान् वराहवपुरीश्वर ॥

इत्यादिना प्रतिपादितवैभवस्य एव प्रायश सर्वेष्वेव श्रीवेंकटाचल माहात्म्यपरपुराणभागेषु प्रतिपादितसुप्रसिद्धवैभवस्य श्रीस्वामिपुष्करिणीपश्चि-मतीरे विराजमानस्यास्य श्रीवराहभगवत श्री श्रीनिवासभगवत प्रागेव श्रीवेंकटाचले कृतसंनिधानत्वेऽपि ब्रह्मादिभि श्रीश्रीनिवासभगवतएव इत पूर्व प्रबलमहोत्सवादीना निर्वर्तनस्य पुराणप्रतिपन्नतया अधुनातस्यैवोत्सवादीना क्रियमाणतयाच तदीयोत्सव सकोचकरणायोगात् ।

रथ्याबल्यन्तरे देव बलिहोम विवर्जितम् ।
आराधयेदप्रधान नकुर्यादुत्सवादिकम् ॥

इति श्रीवैखानसशास्त्रानन्दसहितावचनेन एकस्मिन् क्षेत्रे एकरथ्या-बल्यर्चनान्तरालस्थितयो द्वयोर्देवयो समप्राधान्येन बलिपीठार्चन नित्यहोम-महोत्सवादीना अकर्तव्यताया द्वयोरेकस्य अप्रधानीकृतस्य बलिहोमविवर्जित नित्याराधनमात्रस्य कर्तव्यतायाश्च प्रतिपन्नत्वाच्च, अस्य श्रीवराहभगवतो बलिपीठार्चन नित्यहोममहोत्सवादीन्विना त्रिसन्ध्यमर्चनादिक पर कर्तव्यम् । तदपि ब्राह्मपुराणे अष्टमाध्याये—

उवाच वचन देव सर्वलोकस्य पश्यतः ।
वराहतीर्थनाम्नाच भागोऽय प्रथितो भवेत् ॥
योऽत्रायाति हरि सोऽत्र नास्नात्वैवाशुचिर्नमेत् ॥

वराहदर्शनात्पूर्वं श्रीनिवासं नमेन्नच ।
दर्शनात्प्राग्वराहस्य श्रीनिवासो नतृप्यति ॥

इति कृत्वा व्यवस्थास परमेष्ठी पितामहः ।
दृष्ट्वाऽथ श्रीनिवासच स्तुत्वाच विविधै स्तवै॰ ॥

पादौ प्रगृह्य देवस्य ययाचे वरमुत्तमम् ।
मत्स्थापितवराहस्य पूर्वं स्यात्पूजन हरे ॥

दर्शनस्नानदानाद्यै रित्युक्तोऽथ श्रिय पति ।
तथास्त्विति वर दत्वा कारयामास तत्तथा ॥ इति वचनै ।

ततो निषाद तप्राह किटिरूपी हरि स्वयम् ।
पूर्वं सेव्य विमान मे तीर्थंच श्रीनिवासत ।
तत॰ प्रभृति तत्तीर्थं पूर्वसेव्य बभूवह ॥ इतिवचनेन

भविष्योत्तरपुराणे पञ्चमाध्याये श्रीवराहभगवच्छ्रीनिवासभगवत्स-
वादे—

दैवेन दृष्टवानस्मि त्वामद्येह धराधरम् ।
अत्रैव निवसामीति सङ्कल्पो मम वर्तते ॥

स्थल देह्यवनीकान्त ! यावत्कलियुग भवेत् ।
इति तेन मविज्ञप्तो वराहवदनो हरि ॥

उवाच वचन देव॰ स्थल मौल्येन गृह्यताम् ।
इति वाक्य तत श्रुत्वा प्रोवाच मधुर वच ॥

प्रथमं दर्शनंच स्यान्नैवेद्य क्षीरसेचनम् ।
इदमेव पर द्रव्य ददामि करुणानिधे ॥

दास्यामि यत्ते भूकान्त तदङ्गीकुरु माधव ।
वरं द्रव्यमिद तात कृपां कुरु कृपानिधे ॥

इत्युक्तो हरिणा पोत्री हरये स्थानकांक्षिणे ।
तदा ददौ स्थल पादशतमात्र रमापते ॥

इति वचनैश्च श्रीवेङ्कटनाथात्प्रागेव कर्तव्यम् । यात्रापरै. तदीयतीर्थ-विमानादिसेवनमपिच प्राक् कर्तव्य इति व्यवस्था कृत्वा तदानी श्रीवराह-भगवत उत्सवमूर्तिमप्यवतार्य प्रतिष्ठाप्य एकस्मिन् दिने अस्याध्ययनोत्सवो निर्वर्तनीय इति ।

श्रीवेङ्कटवराहाय स्वामिपुष्करिणीतटे ।
श्रवणर्क्षे तुलामासे प्रादुर्भूतात्मने नम ॥

इत्युक्त तुलामासश्रवणे श्रीवराहदेवावतारदिव्यक्षेत्रभूते श्रीवराहजयन्त्याच विशेषोत्सवोनिर्वर्तनीय इतिच भगवान् रामानुजमुनिः व्यवस्थापयामास ॥

**अथ श्रीवेङ्कटनाथदिव्यालयसंबन्धि सर्वकार्यनिर्वाहकप्रधान-पतित्वलक्षण पारपत्याधिकारवाहिन श्रीवैष्णवस्य मर्यादाविशेषनिर्वर्तनवृत्तान्त उच्यते ॥**

श्रीवेङ्कटनाथाभिमानान्तर्भूते श्रीपद्पुरीदिव्यदेशे क्रिमिकण्ठचोलोपद्रव-व्याजेन श्रीचित्रकूटाधिनाथे श्रीगोविन्दराजे समागम्य श्रीवेङ्कटनाथदिव्यैश्वर्येण स्वीयसकलोत्सव भोगसाम्राज्यमनुभवति, श्रीवेङ्कटाद्रिश्रीपद्पुर्योरुभयोरेकदिव्य-देशताया व्यवस्थापनानन्तर श्रीवेङ्कटाद्रौ भगवद्दिव्यालये प्रतिदिन रात्रौ भगवत पर्यङ्कासनभोगावसाने भगवदाराधक श्रीशठकोप प्रगृह्य छत्रचामरोप-चारसहितं द्वारसम्मुख श्रीकृष्णमण्डप समानीय दक्षिणाभिमुखस्तिष्ठन् परिचारकै' भगवत कृपाप्रवहति भो श्रीवेङ्कटनाथ श्रीचित्रकूटाधिनाथ सर्वकैङ्कर्य-धुरन्धर श्रीवेङ्कटाद्रिदिव्यसस्थानसर्वकार्यनिर्वाहकविष्वक्सेनेति बिरुदमभिद-धानैस्समाहूतस्य एषोहमस्मि दासइति सन्निधिमुपगतस्य श्रीवेङ्कटनाथदिव्यालय पारपत्याधिकारवाहिन श्रीवैष्णवस्य भगवच्छेषवस्त्रे मस्तके निबध्यमाने श्रीशठ-कोपप्रदानलक्षणसपर्या कुर्यात् । तदनन्तरमेवच भगवन्मन्दिरकवाट बन्धन-मुद्राकरणादिपूर्वक मन्दिरकार्यसमापन कार्यमिति व्यवस्थामपि भगवान् रामानुजमुनिराचयामास ॥

**इत्यनन्तार्यगुम्भितायां श्रीवेङ्कटाचलेतिहासमालायां**
**पञ्चमस्तबक. ॥**

## अथषष्ठस्तबकः ॥

---

### ॥ अथ श्रीशैलपूर्णार्यवृत्तान्त उच्यते ॥

पुराखलु भगवान् यामुनमुनि सकलतन्त्रपारावारपारीण श्रीरङ्गदिव्यक्षेत्रमध्यासीनो निजान्तेवासिभि सकलवेदान्तरहस्यपारदृश्वभि बहुभिः श्रीवैष्णवैः सह सकलशास्त्रार्थप्रवचनपूर्वक परमवैदिकसिद्धान्तशब्दित श्रीवैष्णवदर्शन वर्धयन् श्रीरङ्गनाथमङ्गलाशासनैकपरायण तदीयगुणानुभवकैङ्कर्यप्रवणो बभूव ।

तदानी कदाचित् तस्मिन् यामुनमुनौ श्रीमुखसूक्ताभिख्याया श्रीपराङ्कुशदिव्यसूरि द्राविडब्रह्मसहिताया तृतीयकाण्डे तृतीयश्रीमुखसूक्तमनुसंदधाने तदर्थानुसन्धानविद्धहृदये श्रीपराङ्कुशदिव्यसूरिणा प्रपन्नजनकूटस्थेन श्रीवेङ्कटनाथे किल स्वरूपानुरूपा पुष्कलाप्रपत्तिरनुष्ठिता । परमपुरुषार्थभूत कैंकर्यमपि चैहेव प्रार्थितम् । परमप्राप्यभूतपरमपदवासिनोऽपि नित्यसूरयोऽत्रैवकिल भगवदाराधनार्थान् श्लाघ्यान् पुष्पतीर्थदीपधूपादीन् सादरमूढ्वा समानीय समर्पयन्त कृतार्थता लभन्ते। अस्मिन् दिव्यदेशे भगवदभिषेकार्थ सुगन्धि दिव्यतीर्थ विलक्षणाश्च पुष्पादीन् समर्पयन् भगवन्तमानन्दयितुमिच्छामि । कथमीदृश कैंकर्य मन्दभागधेयस्य मम सुलभ भविष्यतीत्यभिदधाने परमसत्वगुणपरिपूर्ण श्रीशैलपूर्णोऽयं तदन्तेवासिष्वन्यतम स्वय तन्मनोरथपरिपूरणाय तत्प्रतिनिधितया तदभिप्रेत कैङ्कर्य कर्तुमुद्युञ्जान तदनुज्ञाच लब्ध्वा श्रीवेङ्कटगिरिमासाद्य वास कुर्वन् भगवदभिषेकार्थ पवित्रतम भोग्यतमं आरोग्यनिदान अघविनाशनपुण्यतीर्थसलिल भक्त्या श्रीसूक्ताख्य कलिवैरिदिव्यसूरि द्राविडसहितामनुसन्दधान सादरमनुदिनमानीय समर्पयन् पुष्पादींश्च यथाशक्ति समर्पयन् भगवन्तमानन्दयन्नासीत् ।

इत्थ श्रीशैलपूर्णार्येण परमभक्तिसम्पन्नेन सादरमनुदिन क्रियमाणमघविनाशनतीर्थादभिषेकार्थतीर्थानयनकैङ्कर्य स्वात्मना परमप्रीत्या परिगृह्णत

इत्यमुमंशं सर्वे जना अवगच्छन्त्विति परिचिन्तयन् भगवान् श्रीवेङ्कटनाथः कदाचित्परिगृहीतव्याधाकारो धनुष्पाणि पापविनाशतीर्थात् पावनभोग्य भगवदभिषेकतीर्थं सादरमानयन्त श्रीशैलपूर्णार्य मध्येमार्गमभिगम्य हे तात तृषार्तोस्मि तीर्थं मे देहि इति पृच्छन् तस्मिंश्च रे रे व्याध श्रीवेङ्कटनाथार्थं मयानीयमानमिद दिव्यतीर्थं न मनुष्यार्हमिति त व्याध प्रत्याख्याय श्रीकलि-वैरिदिव्यसूरिसबन्धि महाश्रीसूक्तानुसन्धानपूर्वक भगवदनुभवजनितहर्षप्रकर्षेण तीर्थकुम्भ नयत्येवसति स्वय तत्पृष्ठतोऽनुगच्छन् धनुस्सहितशरेणातिलाघवेन त कुम्भ पृष्ठभागे विद्ध्वा छिद्र कृत्वा लघुधारारूपेण तस्माच्छिद्रात् निस्सृत कृत्स्न तीर्थं पपौ ।

स च श्रीशैलपूर्णार्य कलिवैरिदिव्यसूरि श्रीसूक्तानुसन्धान कुर्वन् तत्प्र-तिपाद्यभगवद्गुणगणानुभवनिर्मग्नहृदयो व्याधरूपिणो भगवत किञ्चिदपि कृत्य-मजानन्नेव किञ्चिद्दूर गत्वा ततस्तीर्थक्षरणेन शनैश्शनै लघूभवन्त तीर्थकुम्भमप-गततीर्थमवगच्छन् किमिदमिति पृष्ठनोमुखमावलम्ब्य तीर्थधारा पिबन्त व्याधमा-लोकयन् रे रे व्याध मन्दभाग्य भगवदर्थं नीयमाने तीर्थे किमर्थमित्थ द्रोहमका-र्षीरिति त गर्हयन् हे तात मा त्व विचार कृथा इह सन्निवोदिव्य तीर्थं दर्श-यामि ततो भगवदर्थं तीर्थं नयेति वदता तेन व्याधेन पुरो गच्छता सन्दर्शितस-रणि आकाशगङ्गातीर्थं प्रापित तदानी तत्प्रदेशे तीर्थे अनुपलभ्यमाने ततस्त-स्मिन् व्याधे निजधनुर्मुक्तेन केनचित् तृणेन शरायमाणेन तत्रत्य किंचन शैलभृङ्ग विध्वा तत्र लग्न शरमाकृष्य तदनुप्रपातिनीमतिजवेन सम्पतन्तीं अच्छाच्छ-धारा गगनगङ्गानदी प्रदर्श्य हे तात वियद्गङ्गानदीह्येषा भगवतः प्रियतमाचेय । इत.प्रभृति इतएव मह्य तीर्थमनुदिनमानयेति निजमीश्वरत्व ज्ञापयित्वाऽन्तर्हिते तदिदमाश्चर्यमालोक्य अहो भगवत श्रीवेङ्कटनाथस्य आश्रितजनविषये अत्यद्भुतोऽयं लीलारस इत्यनुसन्दधान ततस्तस्या गगनगङ्गानद्या कुम्भे तीर्थमापूर्य यथापूर्वं तीर्थकुम्भमानीय श्रीवेङ्कटनाथदिव्यालये भगवत्सन्निधौ निदधौ ॥ ततः श्रीवेङ्कटनाथोप्यर्चकमाविष्टस्तन्मुखेन—

भो श्रीशैलपूर्णार्य भवदानीत पावन भोग्यतम दिव्यतीर्थेन मध्येमार्ग-मेव मत्तृषाशान्तिः सञ्जातेति वदन् श्रीशैलपूर्णार्यंचानन्दयन् एतदीयमभिषेक-तीर्थानयनकैङ्कर्यं स्वस्य निरतिशयप्रीतिकरमिति सर्वस्मै लोकाय सम्यक् आवेदयामास ।

तत श्रीशैलपूर्णार्योप्यनेनाभिषेकतीर्थानयनकैङ्कर्येण सञ्जातनिरतिशय-कृपाशीतलकटाक्षपातमनुसन्दधानो धन्यधन्यमात्मान मन्यमान तत प्रभृति तस्मिन्नेव कैङ्कर्ये भृशमभिनिदिष्ट आकाशगङ्गातीर्थादेव नित्य भगवदभिषेक-तीर्थमानीय समर्पयन् भगवन्त सन्तोषयन्नवात्सीत् ।

अथ किल परमसत्वशमदमाद्यात्मगुणपरिपूर्ण श्रीशैलपूर्णार्य स्वानु-रूपरूपगुणशालिन स्वाभिमानकुमारस्य कुमारश्रीशैलपूर्णइति नामधेयादनन्तर महाश्रीशैलपूर्ण इति श्रीयामुनमुनिनियमनेन श्रीवेङ्कटाद्रिमागत्य निरन्तरवास कृत्वा भगवत्कैङ्कर्यैकपरायणतया वर्तमानो व्याधरूपेण भगवता तातेत्यामन्त्रणेन श्रीशैलनाथतातगुरुरितिच प्रसिद्धनामधेयो बभूव ।

इत्थ भगवदभिषेकतीर्थानयन कैकर्यैकपरायणस्य ततएव निरतिशय भगवत्प्रीतिभाजनीभूतस्य परमभागवतोत्तमस्य श्रीशैलपूर्णार्यस्य दिव्यचरणप्रव-णहृदयैरार्यैरनुसन्धीयमानास्तदीयकैङ्कर्य तत्प्रीतभगवन्निरतिशयानुग्रहकार्याद्य-भिव्यञ्जका श्लोका ॥

तातेति सबोध्यमञ्जनाद्रावानीयमानाज्जलपूर्णकुंभात् ।
पपौ जल सादरमम्बुजाक्ष श्रीशैलपूर्णार्य नमोस्तु तस्मै ॥

कृच्छ्रात्पापविनाशपूरितपय कुम्भदधान शिर-
स्यायान्त शबराकृति पथि हरि श्रीशैलपूर्ण गुरुम् ।
तातेत्यर्थितवानदत्त उदके पीत शराघातत
कुम्भ छिद्रयता तथा तदुदक श्रीनायकेनामुना ॥

खिन्ने श्रीशैलपूर्णेत्वथ पयसि हृते तद्विषादान्निषादा-
कार. कारुण्यतस्त करतलमवलम्ब्यानयन्नञ्जनाद्रौ ।

बाणेनोद्भाव्य गगा गगनसुरनदी वेंकटेशप्रियेय
तत्तोय मेप्रदद्या दनिशमिति वदन्नन्ततोऽभूददृश्य' ॥ इत्येवं रूपा इति।

## तद्विषयः शिष्यैर्नित्यानुसन्धय आचार्यमन्त्रः

पितामहस्यापि पितामहाय प्राचेतसादेशफलप्रदाय ।
श्रीभाष्यकारोत्तमदेशिकाय श्रीशैलपूर्णाय नमो नमस्तात् ॥ इत्येवंरूपइति

तदीय दिव्यावतारनक्षत्र मेषमास स्वातीति ।

श्रीमल्लक्ष्मणयोगीन्द्रश्रीरामायण देशिकम् ।
वन्दे श्रीशैलपूर्णार्य मेषे स्वातीसमुद्भवमिति ॥

तद्विषय तदीयपद्यमितिच इहानुसन्धेयम् ।

अस्य खलु श्रीशैलपूर्णस्य रामानुजाख्ये स्वकुमारे विपन्ने तत स्वानुरूपरूपगुणशाली ततएवहेतो कुमारश्रीशैलपूर्णइति नाम्ना विख्यातो मित्रतातापरनामधेयो निखिलवेदान्तार्थवेत्ता कश्चिदाभिमानिक स्वीकृततनय आसीत् । निरतिशयभगवद्भक्तिशालिनि स्वानुरूपसकलात्मगुणशालिनि तस्मिस्तनये परमप्रेम्णा सर्वदा तानेत्येव तदामन्त्रणात् तातइतिसज्ञाया., निखिलवेदान्ततत्ववेदिनोऽस्य कदाचित् वादिविजयकाले मित्रतया परिग्राह्यताया श्रीवेंकटनाथेन श्रीभाष्यकारप्रति स्वप्ने अभिधानात् ततो भाष्यकारेणापि सर्वलोकोपकारक मायावादिविजयानुकूलतया भगवता निर्दिष्टस्यास्य श्रीशैलपूर्णतनयस्य सर्वलोकमित्रतयैव ख्यापितत्वान्मित्रसज्ञायाश्च द्वयोस्समावेशेन मित्रतातार्यसज्ञाह्यस्य सुप्रथिता सबभूव ॥

एतद्विषयानपि श्लोकानिमान् जगुरार्या' —

श्रीमद्भाष्यकृतोह्यभेदकथकैर्वादे पणे प्रस्तुते
साम्यैक्यश्रुतिभेदवाक्य हृदयान्युक्त्वा निशीथे हरि ।
मित्र भाष्यकृते जगाद यमय सर्वस्वमित्र जगौ
त श्रीभूधरपूर्णपुत्रमवरं श्रीशैलपूर्णं भजे ॥ १ ॥

भारद्वाजकुलाब्धीन्दु प्रज्ञाभक्त्यमृतार्णवम् ।
श्रीशैलपूर्णतनयं मित्रतातगुरुं भजे ॥ २ ॥

श्रीमद्वेंकटनायकस्य शबराकारस्य वाक्यात्पर-
तातेत्याह्वयतो हि यस्य महिमा लोके प्रसिद्धि गत ।
तत्तातस्यच तातभूतमपर श्रीशैलपूर्ण गुरु
भारद्वाजकुलीन माश्रितनिधि प्रज्ञानिधि सश्रये ॥ ३ ॥ इति ।

इत्थभूत सुप्रथितगुणगणशालिना मित्रतातापरनाम्ना स्वतनयेन कुमारश्रीशैलपूर्णेन सह महाश्रीशैलपूर्णार्य स्वाचार्यभूतयामुनमुनिनियमित भगवदभिषेकतीर्थानयनकैङ्कर्य सादर कुर्वन् किंचित्कालानन्तरं तत्तनयपुरस्सरमेव परम पद भेजे ।

सच श्रीशैलपूर्णार्य परमपद जिगमिषु स्वाराध्य भगवन्त नवनीतहस्त श्रीकृष्ण समुद्घाटितालयद्वारकवाट अपसारित तिरस्करिणीकच कारयित्वा स्वात्मान तस्य सम्मुख सनिधाप्य बद्धाञ्जलि

'छायया सह मणिवर्णममुञ्चमहमितस्तव ।
चञ्चूपुटान्त मेधुरहविरर्पयितार गवेषयस्व' ॥

इति श्रीपराकुशदिव्यसूरि श्रीमुखसूक्त्याख्य द्राविडब्रह्मसहिताप्रथमकाण्ड चतुर्थश्रीमुखसूक्ताष्टमगाथोत्तरार्धमनुसदधान भगवन् इत पर भवतो **विम्बाधरे दिव्यवक्त्रारविन्दे** श्लाघ्यहविस्समर्पयितार गवेषयस्व गवेषयस्वेति कथनयोग्यदशापन्नोऽह गच्छामीति विज्ञाप्य भगवन्त श्रीवेंकटनाथं ध्यायन् भगवन् अद्य यावदाचार्यनियमनानुरोधेन भवदभिषेकतीर्थानयनकैङ्कर्य यथाशक्त्यकार्ष इत पर तादृशकैङ्कर्यकर्तारं गवेषयस्व । भवदीय परमकृपाकटाक्षेण भवदीयदिव्यभूति गन्तुमभ्यनुजानीहि दासमिति प्रार्थयन् सर्वाश्च भगवत्परिवारान् भागवताश्च क्षामयन् द्वयानुसन्धानैकपरायणः स्वाचार्यदिव्यचरणारविन्दद्वन्द्वच परमपदप्रासादार्चिरादिमार्ग परमनिश्श्रेणीसोपानपङ्क्तिसमारोहणप्रधानपरिकरभूतमनुसंदधानो नित्यविभूतिमवजगाहे ।

इत्थ श्रीशैलपूर्णावतारसमाप्त्यनन्तर तदीयचरणारविन्दद्वन्द्वनिरतिशयप्रेमशाली भगवान् रामानुजमुनिः श्रीशैलपूर्णार्यकृत भगवदर्थ तीर्थानयनकैकर्यस्य भगवतो निरतिशयप्रीतिनिदानभूततया तन्मूलतयैव भगवता तस्मिन्निरतिशयानुग्रहकरणेनच तत्प्रत्यभिज्ञाकर· कश्चित् भगवत. उत्सव कर्तव्य· । सच श्रीशैलपूर्णार्ये भगवता विशेषानुग्रहकरणदिवसस्य अध्ययनोत्सवसमाप्ति समनन्तरदिवसत्वात् तादृशे दिवसे कर्तव्यइत्यनुशशास सर्वान् भगवत्परिवारान् । तत स्थलवासिन· सर्वेऽप्यार्या भगवत्परिवाराश्च श्रीवेंकटनाथाद्ध्ययनोत्सवसमनन्तरदिवमे पुरा व्याधरूपेण भगवता अभिपेकतीर्थमानयन्त श्रीशैलपूर्णार्य मध्येमार्गमभिगम्य कृत तदीयकुम्भतीर्थपान सर्वेऽपि प्रत्यभिजानन्त समुज्जीवेयुरित्यनुसन्दधाना श्रीरामानुजमुनि पुरस्कुर्वाणा भगवन्त श्रीनिवास मङ्गलगिरिसमारूढ सपरिवार नयन्त आकाशगगातीर्थमार्गे किंचिद्दूर गत्वा गगनगगातीर्थात् दिव्यतीर्थपरिपूर्णान् कुम्भानानयन्त. काश्चन श्रीवैष्णवानभिगम्य महाश्रीसूक्ताख्य कलिवैरिदिव्यसूरि द्राविडसहितामुपक्रम्यानुसदधाना नगरीमागम्य चतसृषु वीधो[धि]पु समतत आव्रजन्त तत्रतत्र श्रीवैष्णवै स्वस्वपुरोङ्गणेपु पाद्यगन्धपुष्पधूपदीपसदक्षिणताम्बूलप्रदानै सत्क्रियमाणा भगवन्मन्दिरं प्रविश्य श्रीपुरुषसूक्तानुसन्धान कुर्वाणा तदा समानीतगगनगगातीर्थकुम्भेषु कतिपयकुम्भै भगवन श्रीनिवासस्य निरन्तर कुसुमपटलघुमुघुमितौ दिव्यचरणौ श्रीशठकोपचाभिषिच्य गन्धपुष्पधूपदीपादिभिरुपचारैरभ्यर्च्य तदितरकुम्भतीर्थानि सकलपरिमलघुमुघुमितानि पानीय तीर्थतया भगवने श्रीनिवासाय निवेदयामासु । तत प्रभृति श्रीमदध्ययनोत्सवसमनन्तरदिवसे शीतलतीर्थामृताभिगमयात्रोत्सवसज्ञितोऽयमुत्सव प्रतिसवत्सरमनुष्ठीयते ॥

## ॥ अथ श्रीशैलानन्तार्यवृत्तान्त उच्यते ॥

अयंकिलानन्तार्य •श्रीभगवद्रामानुजमुनिरूपेणावतीर्णेन फणिराजेन भगवताऽनन्तेन सकलशास्त्रार्थप्रवचनैकपरायणेन परमशास्त्रार्थान् उपदेशतइव स्वानुष्ठानमुखेनापि सबोध्य जगदुद्दिधीर्षुणा द्वयमेकेनाकारेण कर्तुमशक्यं·

मन्वानेन श्रीमति बदरिकाश्रमे नरनारायणवेषापन्नभगवद्वत् स्वयमपि द्वेधा बुभूषुणा पश्चिमदेशे श्रीकावेरीतीरे लघुनूतनपुरे महिततरभरद्वाजगोत्रात् वैष्णवकुलशिखामणेः केशवाचार्यात् स्वांशेनैव चतुष्पञ्चाशदधिकशतोत्तर-चतुस्सहस्रीसंख्येषु [४१५४] कल्यब्देषु पञ्चसप्तत्यधिक नवशतीसंख्येषु [९७५]शालिवाहनशकाब्देषु गतेषु विजयसंवत्सरे मेषगते पूषणि चित्रान-क्षत्रे प्रादुर्भावितः संबभूव ॥

भगवद्रामानुजमुनिरूपिणः फणिराजस्य तदेतद्द्वितीयावतारविषयमपि इमं श्लोकमनुसंदधत आर्याः ।

कल्यब्देषु प्रयातेष्वथ जलधिशरेन्द्वब्धिसंख्येषु चन्द्रे
चित्रारूढेच मेषं सवितरि विजयाभिख्यवर्षे प्रवर्षे ।
भारद्वाजान्वयेन्दोर्लघुनवनगरे केशवाचार्यवर्यात्
शेषः स्वांशेन भूयोऽप्यहह वसुमतीभागधेयाद्बभूव ॥ इति ।

तदनु केशवाचार्येण फणिराजस्वप्नोन्नीतावताररहस्येन स्वावतारानु-गुणेन अनन्तार्य इति नाम्ना संस्कृतः क्रमेण लम्भितसर्वसंस्कारः अध्यापिता-खिलानुशासनः शुक्लपक्षे चन्द्रइव दिनेदिने तेजसाऽभिवर्धमानः श्रीरङ्गनगर-मध्यासीनं श्रीरामानुजमुनिरूपं फणिपतिं स्वांशेन श्रीराममिव सौमित्रिः भरत-मिवच शत्रुघ्नः समाश्रयितुकामो यज्ञेशादिभिः सह श्रीरङ्गनगरीं ययौ ॥

ततश्च स भगवान् रामानुजमुनिः ततः स्वल्पकालात्पुरस्तादेव विद्व-दग्रेसरस्य यज्ञमूर्तेर्वादे विजित्य श्रीवैष्णवीकृतस्य महाज्ञानाधिकस्य परम-भागवतोत्तमभावमापन्नस्य दयापालमन्नाथमुनिसंज्ञया स्वसंज्ञागमितया समलं-कृतस्य स्वसमानप्रतिष्ठालिलम्भयिषया पृथक्स्थाने संस्थापितस्य सकाशा-दनन्तार्यस्य सहागतैर्यज्ञेशादिभिस्सह भगवत्समाश्रयणं कारयामास ॥

सच दयापालमुनिः अनन्तार्यादीन् स्वसन्निधौ लब्धभगवत्समा-श्रयणात् स्वात्मानमेवानुचरतः शिष्यभावापन्नान् स्वात्मानंच तेषामाचार्यभावा-पन्नं कारयन्तं श्रीरामानुजमुनिमालोक्य भगवन् श्रीरामानुजमुने नाहमिमा-

माचार्यपदभरं वोढु शक्ष्यामि । एताननन्तार्यादीन् भगवानेव शिष्यान् गृह्णातु । भो अनन्तार्यादय आर्या भगवान् रामानुजमुनि कलविङ्कग्रीवायां तालफलमिव मदीयग्रीवायामिदमाचार्यपद बबन्ध । नचाहमिममाचार्यपदं वोढुं शक्नोमि श्रीरामानुजमुनिचरणयुगलैकशरणाभवन्तु भवन्त इति श्रीरामानुजमुनिमनन्तार्यादींश्च विज्ञापयन् भगवतो रामानुजमुनेरेव दिव्यचरणनलिनयोरेनान् समर्पयामास ।

तदनु नारायणो नरेणेव सभगवान् रामानुजमुनि स्वशिष्यभावमापन्नेनानन्तार्येण सगत अखिलशास्त्रार्थाना यथावदुपदेशमनुष्ठानच यथामनोरथ निर्वर्तयामास ।

इत्थमखिलशास्त्रार्थे यथावदनुष्ठानपरायणस्य अनन्तार्यस्यापि सकाशे बहवो भगवत्समाश्रयणमलभन्त ।

अथ कदाचित् श्रीमुखसूक्ताख्यश्रीपराङ्कुशदिव्यसूरि द्राविडब्रह्मसहिताप्रवचनैकपरायण श्रीरामानुजमुनि तृतीयकाण्डतृतीयश्रीमुखसूक्त द्वितीयगाथाप्रवचनसमये निजदिव्यगोष्ठ्या विराजमानान् सर्वानार्यान् सबोध्य भो आर्या अस्मत्ताततातताततातातस्यापिप्रथमस्तात देवैर्देवाधिपेनसह विकीर्यमाणाना पुष्पाणामुल्लासाकरे श्रीवेंकटे अनन्तगुणप्रथश्यामसुन्दरस्वामीति द्वितीयस्यामस्या गाथायापरमपदवासिभि नित्यसूरिभिरपि निखिलनित्यसूरिपरिषन्निर्वाहकेण श्रीमता विष्वक्सेनेन सहेह भगवत्समाराधनार्थं दिव्यपुष्पपाणिभि समागतैरत्रत्य भगवन्निरवधिक सौशील्यदिव्यकल्याणगुणानुभवसजातहर्षप्रकर्षप्रशिथिलपाणिभि रवशकीर्यमाणाना दिव्यपुष्पाणामपि महोल्लासकरे अस्मिन् श्रीवेंकटाचले परमपदेप्यलब्धामनन्ता गुणप्रथा भजमान नीलमेघश्यामलदिव्यविग्रहवर्णसौन्दर्यशाली स्वामी अनन्तार्यघटितायामस्मच्छेषपरम्पराया प्रथम' खल्विति प्रतिपादयता श्रीपराङ्कुशदिव्यसूरिणा परमपदवासिभिरप्यत्रागत्यकैङ्कर्यकरणादय श्रीवेंकटाद्रिर्निरतिशयभगवन्मुखोल्लासहेतु कैङ्कर्यस्थानमिति दिव्यपुष्पपाणयस्सूरयस्समागता इत्युक्त्वा पुष्पकैङ्कर्यमस्य वेंकटनाथस्य निरतिशयप्रियमिति कीर्यमाणानामपि पुष्पाणामुल्लासहेतुरयं

गिरिरित्यभिधानेन निरतिशयपुष्पसमृद्धिहेतुरयं गिरिरिति । अनत्रधिक-सौशील्यगुणप्रथो दिव्यसौन्दर्यशाली प्राप्तस्वामी परात्परः शेषीचायं वेंकटनाथ इत्यभिधानेनावश्यमाराधनीयोऽप्ययमितिच प्रतिपादनात् अयं वेंकटनाथः अवश्यं पुष्पकैङ्कर्येणाराधनीय इतिहि सिध्यति । तदिह प्रथित पुष्पमण्ड-पाभिधाने श्रीवेंकटाद्रौ श्रीमतो वेंकटनाथस्य मुखोल्लासाय किंचन नन्दनवनं विधाय अनुदिन अतिसुरभिकुसुमतुलसिकामालासमर्पणकैङ्कर्यकारी कोनु-वास्यादस्यां गोष्ठ्यामिति सर्वानार्यान् पप्रच्छ ।

इत्थ श्रीरामानुजमुनिना पृष्ठायामार्यगोष्ठ्यां श्रीवेंकटाचलशीतभीत्या निरुत्तराया अनन्तार्य अहो भगवद्दासेन ईदृशशीतभीत्यैववा कम्पितव्य परलोकहानिभीत्या निरवधिककल्याणगुणगणाधिकाचार्यशासनभङ्गभीत्याच किंकिंचिदपि नकम्पितव्यम् । इदमेववा समुचित शिष्यलक्षणम् । सुसुन्दरमिद यदाज्ञापयत्याचार्यस्तदेवहि निश्श्रेयमार्थिनः शिष्यस्य श्रेय । आचार्यशास-नातिलङ्घिन किंनुवा शिष्यत्व नाम तस्मादाचार्येणानुशिष्यमाणस्य परमदु-ष्करस्याप्यस्य श्रीवेंकटनाथकैंकर्यस्याङ्गीकारएव स्वरूपानुगुण परमनिश्श्रे-यस्करश्चेत्यनुसदधान सद्यस्समुत्थाय बद्धाञ्जलि भगवन् नस्स्वामिन् एषोऽहं भगवतो वेंकटनाथस्य पुष्पकैङ्कर्याय सज्जोऽस्मि मा नियुङ्क्ष्वेति स्वावतारप्रयोज-नभूता कैङ्कर्यनिष्ठा सप्रार्थयामास ।

इत्थमभ्यर्थयन्तमनन्तार्यमालोक्य श्रीरामानुजमुनि भृश सतुष्टस्सन् भो अनन्तार्य त्व खल्वस्या गोष्ठ्या पुरुषोऽसि । पुष्कलात्मगुणोऽपि तस्या-चार्यशासनभङ्गमसहमानस्य तवैव खल्वाचार्यपुरुषपदमर्हमिति तं सभाव्य सहैव सकलया गोष्ठ्या सद्यस्समुत्थाय ससभ्रममालिङ्ग्य पुरुषशब्दबिरुद पारि-तोषिकदान सत्कृतमेनमनन्तार्य श्रीवेंकटाचलंप्रतिप्रस्थापयामास ।

तदनु समततो विख्यातानन्तपुरुषाचार्याभिधानोऽनन्तार्य सदार श्रीवेंकटाद्रिमुपगम्य भगवन्तमनुदिन वन्दमानः तत्र विपुलतम नन्दनवन तदाधार महातडाग नन्दनवनमध्ये कांचन वापीच विधाय सर्वेषामपि श्रीरामानुजसज्ञा विधाय श्रीरामानुजशासनानुगुण पुष्पकैङ्कर्यपरायणोऽभूत् ।

एव तस्मिन् श्रीरामानुजमहातडागे मद्धयतटभागे सलिलनिर्गममार्गमेकं श्रीरामानुजारामे फलपुष्पतरुगुल्मलताद्यालवालेषु श्रीरामानुजवापिकायाच तदातदा सेचनप्रचारणस्थापनप्रपूरणाद्यर्थसलिलानयनानुकूलमनन्तार्यो निरमासीत् ।

एव भगवद्दिव्यालये सगोपुर प्राकार तदन्त पुष्पवाटिकासमीपे भगवद्रामानुजमुनिशासनेन तदीयपरमाचार्यभूत श्रीयामुनमुनि सञ्ज्ञाचिह्नितम् श्रीयामुनमुन्यर्चाविग्रहसमेत पुष्पमालाकरमण्डपच अनन्तार्यो निरमासीत ॥

श्रीयामुनमुनि प्रागिह कञ्चित्काल स्थित्वा तत्स्थाने कुटीर कृत्वा तस्मिन् पुष्पमालाजाल निबद्धय भगवने श्रीनिवाराय समर्पयन्नासी-दिति वृद्धजनकथिता कथामाकर्णयता भगवता भाष्यकारेण श्रीयामु-नमुनिनाम्ना पुष्पमालाकरमण्डप निबध्य तत्र श्रीयामुनमुनिमर्चारूपिण-मवतार्य प्रतिष्ठाप्य समाराधनमपि निर्वर्तनीयमिति नियमनात् स्वाचार्यसञ्ज्ञा-मपि विधाय अनन्तार्यो यथाऽचार्यानुशासन सर्व निरवर्तयत् । अनन्तार्योऽपि स्वय तस्मिन्नेव मण्डपे श्रीरामानुजनन्दनवनात् पुष्पाण्यानीय स्थापयित्वा तत्रैव माल्यानि निबद्धय पश्चान्मालाजालपरिपूरित कण्डोल गन्धग्रहणजाप-चारपरिहाराय शाटिकानिबद्धमुखनासिक परमादरेण मस्तके बिभ्राण सह-छत्रचामरादिपरिच्छद· सहमङ्गलवाद्य करदीपिकापुरस्सरो यामुनमण्डपान्नि-र्गत्य मन्दिर प्रदक्षिणीकुर्वन् भगवदाराधनसमये भगवत्सन्निधिप्रति प्रतिदिन नयन् भगवन्तमुपासीन आसीत् ॥

अनन्तार्येणहि परमादरेण परिपूर्णगर्भया देव्या कुमारेणचसह श्रीरामा-नुजतडाग खनता मृद्धारे देव्या वाह्यमाने परमकारुणिको भगवान् पूर्णग-र्भामनन्तार्यदेवी मृद्धारमुद्वहन्ती द्रष्टुमशक्नुवन् वटुरूपी सन्निधाय स्वय तद्धार वोढुमुद्युक्तः स्वकैङ्कर्ये परसबन्धमसहमानेन तेन निरुद्धोऽपि तद्देव्यां करुणाति-शयेन मध्येमार्ग पुन पुनरागत्य देवीहस्तान्मृद्धार कण्डोल बलात् गृहीत्वा बभार ॥

ततश्च विज्ञातवृत्तान्तोऽनन्तार्यं वटुरूपिण भगवन्तमनुधावन् खनित्रेण चुबुके प्राहार्षीन् । तदन्वनन्तार्येण गुरुखनित्रेण ताडितचुबुको वटुरूपी भगवान् चुबुकगलद्रुधिरधारो धावन् निजमानन्दनिलयविमानमवजगाहे ॥

ततश्चानन्तार्यो मन्दिरान्तर्गत्वा भगवन्त चुबुकगलद्रुधिरधार दृष्ट्वा कृतमहापचारमात्मान मन्यमान क्षामयन् भगवन्तमुपतिष्ठमान चुबुकव्रणे रुधिरधाराशमनाय पुष्पधूलि प्राक्षिपत् ॥

ततो भगवान् श्रीनिवास अनन्तार्यकैङ्कर्यश्रद्धाभूम्ना सन्तुष्ट त सान्त्वयन् तद्व्रणचिह्न श्रीवत्सचिह्नमिव भावयन् सर्वेषा तदीयमहिमप्रकाशनाय चुबुकव्रणस्थाने सर्वदा सुगन्धिघनसारचूर्ण धारयन् तदीयखनित्रमपि तदीयवैभवख्यापनाय सर्वलोकसदर्शनयोग्यस्थले स्थापयन् वस्त्रभूषणमाल्यादिभि तच सभाजयामास ॥

कदाचिदनन्तार्यविरचिते श्रीरामानुजारामे चिर स्वैरविहार कुर्वाणौ राजदम्पतीवेषभूषितौ श्रीपद्मावती श्रीनिवासौ कस्याचिद्रात्र्या कुत्रचित् निकुञ्जे निलीन अनन्तार्य प्रगृह्य कचित्तरौ। लतापाशेन बद्धुमाकर्षन् श्रीवेंकटनाथे कथचिद्भग्नौ विमोच्य पलायिते पद्मावतीदेवी पलायितुमशक्नुवन्ती भोस्तात तात तवाह पुत्रीभवामि स्त्रियमनपराधिनी मा मुञ्चेति करुण वदन्ती चम्पकवृक्षे कचन लतापाशेन निबध्य भर्त्सयन् तदीयवृत्तान्तच पृच्छन् पार्श्वतएवावतिष्ठमान प्रातर्भगवन्मन्दिरमागतैरर्चकपरिचारकै भगवद्वक्षोनिलयकण्ठिकालय पद्मावतीमलभमानैर्भगवता कंचन पुरुषमाविश्य ज्ञापितवृत्तान्तैर्भगवदाज्ञया पद्मावतीमनन्तार्यच आनेतुमागतैर्विदितवृत्तान्तस्सद्यो महापचार मन्वानस्सन् देवी पद्मावती चम्पकतरुबन्धनात् विमोच्य क्षामयित्वा कृतनित्यकृत्य प्रागुक्तनिजवाक्यसत्यताचिकीर्षया परिणययोग्यकन्यादशामापद्य पुत्रीभावं भजमाना पद्मावतीदेवीं सपुष्पपिटक कक्षे दधान भगवन्तमुपसद्य वन्दमान. क्षामयन् काचन माला निजकण्ठादुद्धृत्य आत्मन कण्ठे निक्षिप्य सभाजयते त्वदीयामिमा कन्यां मह्य देहीतिचाभ्यर्थयते

श्रीनिवासाय देवीं समर्पयन् समर्प्यमाणाच देवीं सर्वेष्वर्चकपरिचारकेषु सपश्यत्सु सद्य समुत्प्लुत्य यथापुर कण्ठिकालयकनकमयपद्मावतीरूपिणीमेव सभूता साश्चर्य सहसर्वै सपश्यन् तत प्रभृति पद्मावतीदेवीतातइति श्रीवेंकट- नाथश्वशुरइतिच समतत. सर्वैस्सगीयमान तदातदा वेंकटनाथदर्शनकालेषु

' मच्छ्रीपुत्रीयुक्तवक्षस्थलेति प्रब्रूने मत्प्राणभूतेतिचापि ।
त्वद्दष्ट्राग्रेणाण्डभित्ते र्विभिद्य प्रोन्नीतायाा भूमिदेव्या प्रियेति ।
प्राक्सप्ताशन्युग्रघोषान्महोक्षान् जित्वात्ताया गोपपुत्र्या प्रियेति ।
मत्कन्या श्रीरङ्गभूनित्यवासिन्नाह जानाम्यार्तिसीमानमस्या ' ॥

इत्येवमर्था श्रीमुखसूक्त्याख्य द्राविडब्रह्मसहिंतासप्तमकाण्ड द्वितीयश्रीमुखसूक्त- नवमगाथा एकाकन्येत्यादिषु कन्याशब्दित मन कन्यास्थाने स्वात्मान मातृ - स्थाने श्रीवेंकटाद्रीश श्रीरङ्गेशस्थानेच भावयित्वा मच्छ्रीपुत्रीशब्दवाच्यतया स्वपुत्रीभावापन्नपद्मावतीचानुसन्धाय स्वय श्रीवेंकटनाथविषयामनुसन्दधान तदनन्तरजाता स्वपुत्री यथोक्तवृत्तान्तविशेष प्रत्यभिज्ञापिकया मच्छ्रीपुत्रीस- ज्ञया सज्ञावतीमकार्षीत् ॥

कदाचिदनन्तार्य श्रीरामानुजारामे तुलसीकुसुमापचय कुर्वन् करे केनचिद्भोगिना दष्टो भोगिदष्ट कर श्रीरामानुजचरणावेव शरणमित्यनुसदधान सद्य कुसुमैरपमृजन् स्वामिपुष्करिण्या स्नात सन् विषनिर्हरणसोत्कण्ठानन्ने- वासिनो निवर्त्य भगवन्तमुपतिष्ठमान भगवता श्रीनिवासेन किमिति विष- निर्हरणप्रयत्नादुपरतोऽसीति पृच्छ्यमान स्वावतारबीज फणिराजाश स्वय- मनुसदधान यदि दशनक्रियाकर्ता फणी बलवान् तदा अह विरजानदीमव- गाह्य विधूतकल्मष श्रीवैकुण्ठनाथ परिचरेयम् यदिच दशनक्रियाकर्मीभूत फणी बलवान् तदा पुनरिहैव स्वामिपुष्करिणीमवगाहमानो भवन्तमेव परिचरेयम् । उभयथाऽपि नक्षतिरिति तूष्णीमुपरतोऽस्मीति विज्ञाप्य सुखम- वतस्थे ॥

कदाचिद्यामुनमण्डपे बहुलकुसुममालिकागुम्भनैकपरायणोऽनन्तार्य. तदीयाध्यवसाय परीचिक्षुषुणा भगवता अर्चकमुखेन तदाह्वानाय चोदितेन

दूतेन समाहूत तदा अनागत कुसुममालिकागुम्भनकार्यं निर्वर्त्य मालासंभृत-कण्डोलशिरस्क एवागत· भगवता मदाह्वानसमयएव कुतो नागतोऽसि मदाज्ञातिलङ्घिन त्वामितो निष्कासयामिचेत् किंकरिष्यसीति पृष्ट भगवन् वेंकटनाथ किंने छिन्न ममतु मालतीकुसुममुकुलानि विदलद्दलानि पश्चादशक्य गुम्भनानि विशीर्णगन्धीनिच भविष्यन्ति ततो न तदैवागन्तुमवसरोऽभूत् । नचाचार्यनियमितकैङ्कर्यमपि वा परित्यज्य तदितरत्वदीयकैङ्कर्यं कर्तव्यमिति कश्चिदस्ति निर्बन्ध । परेणागत्याधिष्ठित श्रीवेंकटमहाचलइति श्रीमुखसूक्त्याख्यद्राविडब्रह्मसंहितातृतीयकाण्डतृतीयश्रीमुखसूक्ताष्टमगाथाया प्रतिपादयता तत्त्वदर्शिशिखामणिना श्रीपराङ्कुशदिव्यसूरिणा अत्र विराजमाने श्रीवेंकटाचले मध्ये समागत्य त्वयाधिष्ठान कृतमित्यभिधानेन तवममच साधारणे अस्मिन् श्रीवेंकटाद्रौ वारदिवसप्रागागममात्रेण कथमस्मान्मा त्वं निष्कासयितुमर्हसि । किमा मधुरकविदिव्यसूरिकलामवात्य तदीयनिष्ठामनुतिष्ठन्तमाचार्यैकशरण ततो मधुरकविदासभावमापन्नच नजानासीति प्रतिवदन् तादृश तदीयमाचार्यनिष्ठादार्ढ्यमालोक्य तुष्टेन भगवता किंतेऽपेक्षित तवाचार्यनिष्ठया भृशमह तुष्टोऽस्मि मोक्षस्तु श्रीरामानुजमुनिचरणैकशरणस्य तव करगतएव वर्तते । न स ते मया देय । अपर किंनुवा काङ्क्षस्वेति पृष्टो धन्यधन्यमात्मान मन्यमान भवत्कैंकर्यमन्तरेण किमेऽपेक्षित वर्तते इहामुत्रच तदेवाविच्छिन्न मे वर्धयस्वेति प्रार्थयन् तदीयनिष्कामता वीक्ष्य नितरा तुष्टेन भगवता त्वत्संबन्धिसंबन्धिना मानुषाणाममानुषाणाचाह मोक्ष दास्यामीति वैशेषिकवरलक्षणपारितोषिकदानेन परितोषित मधुरकविनिष्ठा भजमानस्य ममेदृशभगवदनुग्रहलाभेनेत प्रभृति मदीयाना मधुरकविदास इत्येव दास्यनामभवत्विति व्यवस्था कुर्वन् तत प्रभृति विशेषत सर्वै समाश्रीयमाण आसीत् ॥

कदाचिदनन्तार्येण प्राकारे सगोपुरे निबध्यमाने तत्पार्श्वे सजातस्य समन्तत प्रसृतबहुलशाखस्य कस्यचिच्चम्पकभूरुहस्य प्राकारप्रणयनविरोधिन छेदनप्रसङ्गे श्रीवेंकटनाम्न्यस्मत्स्वामिनो महनीयाचले य कश्चिदपिवा जायेयेति श्रीकुलशेखरदिव्यसूरिसंहिताचतुर्थश्रीसूक्तदशमगाथायामभिहितरीत्या कोनुवा

दिव्यसूरिरित्थं भूतो जातो भवेत् । एतदचलवर्तिन स्थावरजङ्गमास्सर्वेऽप्य प्राकृतप्राणिन इतिहि पुराणेऽप्यभिधीयते तस्मान्नेप छेत्तुमर्हइत्यनुसदधानेन नद्दिनरात्रौ भगवन्त ध्यात्वा तरुरूपिण नित्यसूरिंच भगवन् भगवद्धमार्गात् किंचिदपेहीति प्रार्थयता सुखेन प्रात प्रवुद्धेन त चम्पकवृक्ष भगवद्धमार्गादपेत-मालोकयताच तेन यथावदेव प्राकारो निर्मापितोऽभूत् ॥

ततो हेतोरस्य चम्पकप्राकारइति सुप्रसिद्धोऽभूत । कदाचित् श्रीवेंकट-नाथमभिवन्दितु श्रीरङ्गनगरादागतेषु वात्स्यवरदार्यप्रभृतिषु श्रीवेंकटशैलमधि-रोहत्सु केषुचित श्रीवैष्णवेषु गिरिसोपानपरपरारोहणपरिश्रान्तेषु क्षुत्पिपासा-तुरेषु परमकारुणिक श्रीवेंकटनाथ अवलम्बितश्रीवैष्णववटुवेष चित्रान्नपात्र-पाणि तेषामभिमुखमागम्य तेभ्यआनीतचित्रान्न दातु प्रवृत्त अनधिकारिता-शङ्कया तैस्तस्मात्तदन्न ग्रहीतु मन्दिहाने भो वटो कस्त्वमसि कस्यवा शिष्योऽसि किंनामासि कुत्रत्यमिदचित्रान्न 'पद्यमङ्गुलिविच्छेद इत्यादि-शास्त्रेण दासलक्षणतया चोदित शिष्यस्य नित्यानुसन्धेयमन्त्ररूप त्वदाचार्य-पद्यच किंरूपम् । तदेतत्सर्व वदेति पृष्ट श्रीवैष्णवोऽस्मि श्रीशैलानन्तसूरे शिष्यो मधुरकविदासनामाहमस्मि केनचिदध्वनीनेन भवता श्रान्तिमाकर्ण-यता अनन्तार्येण भगवन्निवेदितमिद चित्रान्न युष्मदर्थे प्रेषितम् । गृह्यता-मुपभुज्यतामित्यभिधाय इदच मम नित्यानुसन्धेयमन्त्ररूपमाचार्यपद्यमितिच वदन ,

'अखिलात्मगुणावास मज्ञान तिमिरापहम् ।
आश्रिताना सुशरण वन्देऽनन्तार्यदेशिकम् ' ॥

इति कचन मन्त्र सद्यो निर्माय पपाठ । तदनु पुनरपि तै श्रीवैष्णवै भो वटो! किमस्मिन्मन्त्रे तव परमाचार्यसबन्धस्त्वदाचार्यस्य विद्यमानतया प्रतिपादितो नदृश्यते किं भवता सप्रति कल्पितोऽसौ मन्त्रइति पृष्टस्सवटु. भो आर्या अस्मदाचार्यविषयौ द्वौमन्त्रौ तत्रैकस्सदाचार्यलक्षणगुणातिशयपर अपरस्तु सदाचार्यसबन्धातिशयपर तत्र प्रथमस्तु प्रागुक्त द्वितीयमप्याकर्ण-यन्तु भवन्त इत्यभिधाय—

श्रीमद्रामानुजाचार्य श्रिपदाम्भोरुहद्वयम् ।
सदुत्तमाङ्गसन्धार्यमनन्तार्यमहं भजे ॥

इति द्वितीयमपि कञ्चन मन्त्रं निर्माय पठन् ततस्समाहितचित्तेषु तेषु श्रीवैष्णवेषु चित्रान्नं गृहीत्वा भोक्तुमुपक्रममाणेषु तेभ्योऽनुज्ञां दत्वा किञ्चित्पुरस्तादेवाजगाम ।

ततस्ते श्रीवैष्णवास्तं भगवत्प्रसादं भुक्त्वा गतश्रमाः शनैश्शनैः शैलमारुह्यानन्तार्यमभिवन्दमाना तेनच स्वागतं पृष्टा भगवन् भगवदन्तेवासिमधुरकविदासब्रह्मचारिहस्ते भवत्प्रेषितेन भगवत्प्रसादेन सुतृप्ता गताध्वश्रमा सुखमागच्छाम इत्यवोचन् ।

तदनु कोनुवा मधुरकविदासो नाम मदन्तेवासी ब्रह्मचार्यत्र वर्तते । नच भवता भगवत्प्रसादो मयाऽनुप्रेषितः नवा भवदागमनवृत्तान्तो मया ज्ञातः । सर्वमिदं भवतामध्वश्रममसहमानस्य भगवतश्चेष्टितमित्यनन्तार्येण अभिहितास्ते वैष्णवा मध्येमार्गं तद्वटुचेष्टितं सर्वमपि व्यज्ञापयन् ।

तदनु तं वृत्तान्तमाकर्णयतो विस्मयमानस्यानन्तार्यस्य गोष्ठ्यां वर्तमानाः सर्वेऽप्यार्या इदं सर्वमाकर्णयन्तो विस्मयमानमानसा अहो श्रीवेङ्कटनाथः अनन्तार्यस्य महामदाचार्यलक्षणपौष्कल्यं आचार्यसम्बन्धभूयस्त्वं च स्वयमेवाभिधाय तच्छिष्यभावंच दधानः स्वस्य तस्मिन्निरतिशयाभिमानसद्भावमखिलजनानवगमयति । स्वस्यैतच्छिष्यभावानुसन्धाने किं कारणमितिचेत् श्रीवेङ्कटनाथाय शङ्खचक्रप्रदातुर्भगवतो रामानुजमुनेस्तं प्रत्याचार्यत्वात् शेषांशभूतस्य अस्य अनन्तार्यस्यांशभूतेन भगवद्रामानुजमुनिना एकवस्तुत्वात् ।

'श्रीमद्रामानुजाचार्य श्रीपदाम्भोरुहद्वय' मिति तदीयचरणारविन्दरूपतामस्य ब्रुवाणेन भगवतैव तदंशरूपतायाः ख्याप्यमानत्वाच्च तद्गताचार्यत्वानुसन्धानं परिवाहरूपमत्रत्यमाचार्यत्वानुसन्धानमेव तत्र मूलं भवितुमर्हतीति निश्चिन्वाना. ततोऽनन्तार्ये विशेषप्रतिपत्तिं कुर्वाणाः इत प्रभृति भगवता श्रीवेङ्कटनाथेन परमादरेण निबद्धाविमावेव मन्त्रावनन्तार्यान्तेवासिभिः आचा-

र्यमन्त्रतया समादरणीयाविति श्रीरामानुजमुनेर्दाशरथिकूरेशादिषु त्रिदण्डपादुकाजलपवित्रादिरूपतावत् श्रीवेङ्कटनाथवचनप्रामाण्येनानन्तार्ये चरणारविन्दरूपताऽपि व्यवस्थिता सर्वैरनुसन्धेयेतिच व्यवस्थामकार्षुः ।

कदाचिच्छ्रीरङ्गनगरे श्रीभगवद्रामानुजमुनिमाश्रितेषु कुमारानिद्रालु धनुर्दास (१) कुमारमहाबलिबाणाधिराज (२) अर्जुनग्रामपूर्ण (३) लघ्वार्य (४) इत्येतेषु चतुर्ष्वार्तिप्रपन्नेषु आर्तिप्रकर्षवशात् स्वप्राप्यप्राप्तये त्वरमाणेषु श्रीरामानुजमुनिनियमनानुरोधेन तत्र पूर्वेषु त्रिषु तत्रतत्र स्वस्वरुचित्वरापरिपाकानुगुण तत्तत्स्वस्वप्राप्यलाभपरिवृत्तेषु चतुर्थो लघ्वार्योऽपि सहसैव परमपद काङ्क्षमाण पानीयालाभे शुष्कजिह्वो म्रियमाणस्तृषार्तइव ससारमरुकान्तारे तापत्रयाभिभूतोऽह सद्य एवापर्याप्तामृतालाभे प्राणधारण न लभ इति विज्ञापितेन श्रीरामानुजमुनिना भो लघ्वार्य तवाभिमतप्राप्यप्रद श्रीवेंकटनाथ खलु तत्र गत्वा अनन्तार्यरचितसमुचितपुरुषकारेण भगवन्तमुपसद्य पुरुषार्थ प्राप्नुहीति प्रत्युक्त श्रीवेंकटनाथे प्रावण्यातिशयात् सद्यएव निर्गत श्रीवेंकटाद्रिमासाद्य अनन्तार्यमभिवन्द्य स्वाभिप्राय श्रीरामानुजमुनिदिव्याज्ञाच तस्मै विज्ञाप्य भगवन्ननन्तार्य त्वदीयपुरुषकारेणैव श्रीवेंकटनाथो मा सद्यो रक्षितुमर्हतीति प्रार्थितेनानन्तार्येण अयखलु लघ्वार्य परमार्तिसपन्न सकलकल्याणगुणशाली सदाचार्यपदमुख्याभिधेय श्रीमान् रामानुजमुनिरस्याचार्यो नियन्ता पुरुषार्थप्रदाताच श्रीवेंकटनाथ सर्वज्ञ सर्वशक्त समस्तकल्याणगुणगणमहोदधि । अतोऽस्यापेक्षितपुरुषार्थ सद्य सभवितुमर्हत्येव ।

नखलु सर्वज्ञे सर्वशक्ते परमपुरुषे पुरुषार्थ प्रदातुमुद्युक्ते कश्चिदन्योऽस्ति निरोद्धा । नित्यानपायिनीचाखिलजगन्माता श्री अस्योरस्स्थल क्षणमपि नजहाति ।

एवंस्थिते सद्य पुरुषार्थासभवाशङ्काया नावकाशलेश अतो मत्तोऽय व्याजमात्रतया पुरुषकारकृत्य वाञ्छति । अनुशास्तिच मा पुरुषकारकृत्ये भगवान् रामानुजमुनि । अतोऽवश्यमेवास्मिन्विषये पुरुषकारकृत्यमाचरणीयमित्यनुसदधता समाहितचित्तेन भो लघ्वार्य एहि तर्हि भगवद्रामानुज-

दिव्याज्ञानुसारेण भगवन्तमुपगच्छावेत्यभिहितस्तेन सहैव श्रीवेंकटनाथमुपासदत् ॥

तदन्वनन्तार्यलध्वार्ययो र्द्वयोरपि भगवन्तं प्रणिपत्य मन्दिरान्तं प्रविश्य भगवत्सनिधौ स्थितयो भगवानपि श्रीवेंकटनाथ करुणाशीतलकटाक्षसेचनपूर्वकं तीर्थश्रीशठकोपमाल्यशेषवस्त्र दिव्याङ्गरागादीन् प्रसाद्य तैरलंकृताङ्गौ तौ प्रसादस्वीकारानन्तरमपि कंचित्कालं तिष्ठन्तौ वीक्षमाण शङ्कितमना भो अनन्तार्य किं किंचिद्विज्ञापयितुकामइव तिष्ठसि यदि किंचिद्विज्ञापनीयमस्ति तर्हि तद्विज्ञाप्यताम् माकृथाश्शङ्कामिति चोदितेऽनन्तार्ये भोस्स्वामिन् अय लध्वार्य आर्तप्रपन्नस्सन् भगवता रामानुजमुनिना नियमितं परमपुरुषार्थमद्यैव त्वत्तो लब्धुमुपागत तदद्य सद्यएवास्य पुरुषार्थं प्रदद्या । त्वखलु परमकारुणिक आश्रितवात्सल्यैकजलधि सर्वशक्ति समस्तकल्याणगुणगणमहोदधिरसि किमधिकं विज्ञापनीयमस्तीति विज्ञापयति सति ततो लध्वार्याय भो परमदिविषदा राष्ट्रभूतं परमव्योमपदं तुभ्यमह दत्तवानस्मि स्वीकुरुष्वेति । दिविषदा राष्ट्रमपि त्वं वीक्षस्वेति मोक्षमपि दद्यादिति दिव्यसूरिगाथोक्तप्रकारेण परमप्राप्यभूत परमं पदं प्रादात् ।

ततो लध्वार्य श्रीवेंकटनाथमहोदारता वीक्ष्य सतुष्ट भो अनन्तार्य श्रीवेंकटनाथ स्वस्वरूप विस्मृत्य मत्स्वरूप पश्यतिचेत् मह्य दातु पुराणानि नरकस्थानानि न पर्याप्तानि अपूर्वाणि महानरकस्थानानि बहूनि स्रष्टव्यान्येव । मदीयानादिजन्मपरंपरानुष्ठित पाप परंपराणामपरिमितत्वात् स्वतन्त्रस्यापराधपरामर्शे दण्डनोद्यमस्यापरिहार्यत्वाच्च मत्स्वरूपमपरामृश्य स्वस्वरूद परामृशतिचेत् महोदारस्यास्य मह्य प्रदातुमद्य विद्यमान पुराण परमपदमपि नपर्याप्तम् । अपूर्वाण्यनेकानि परमपदानि स्रष्टव्यान्येव । दीर्घमहाहस्ततायाः अस्य दिव्यसूरिसूक्तिसिद्धत्वात् ॥ अन्यथा प्रार्थनापरिसमाप्ते प्रागेवेत्थम् 'सोऽध्वन परमाप्नोति तद्विष्णो परमपदम्', इति सकलसंसाराध्वपरम पारभूतस्य परमदुर्लभस्य परमपदस्य सद्यःप्रदान कथमिव घटत इत्यनन्तार्य विज्ञाप्य सद्य एव परमव्योम जगाम ॥

ततोऽनन्तार्योऽपि परमविस्मयमापन्न —

हरिद्राचूर्णसस्कार माचरेद्ब्रह्मवित्पितु. ।
कालेतु चरमे पुत्र स्तुतिर्गेयाच वैष्णवै ॥

हारिद्रचूर्णैरङ्गाना गुरूणाच महात्मनाम् ।
कालेऽन्तिमे परिष्कार कुर्यान्मन्त्रपवित्रितै ॥

पुसूक्तेनाभिषेकच ब्रह्ममेधक्रिया चरेत ।
अविलम्बेन कालेन नपर्युष्टेन वै सुत ' ॥ इति श्रीसहितावचनै

' अर्चिरादिगतैर्मार्गचिन्ताद्ध्याय शुभावहम् ।
पठेयुरनघा विप्राश्चान्या ब्रह्मपरा स्तुती ॥

मानुषीश्च ऋषिप्रोक्ता पितृणा शाव उत्सवे ।
उलूखलेतु मुसलै कायमाने मनोहरे ॥

स्थाप्य शुद्धा हरिद्रावै दार्भभि केशवस्यच ।
चूर्णीकृत्य ततो मन्त्रै परिष्कार चरेद्बुध ' ॥

इति सहितान्तरवचनैश्च उक्तरीत्या श्रीपाञ्चरात्रोत्तरखण्डान्तर्गत शौनकब्रह्मसवादरूपैक त्रिशाध्यायेन,

श्रोतुमिच्छामि सस्कार भगवन् ब्रह्ममेधिनाम् ।
यद्वैष्णवाना विहित तन्मे ब्रूहि पितामह ॥ इत्यादिना

एवविध ब्रह्ममेध येकुर्वन्तीह वैष्णवा' ।

ते सर्वे वैष्णव लोक प्रयान्ति क्षीणकल्मषा ॥ इत्यन्तेन उक्तरीत्याच तस्याविलम्बेन श्रीचूर्णपरिपालन रथयानपूर्वकब्रह्ममेधसस्कारादिलक्षणचरमकैङ्कर्य स्वयमेव परमादरेणाकर्षीत् । एव वर्धितवन्मङ्गलग्रामाधिपश्रीवैष्णवदासनामविप्रवरमोक्षदानवृत्तान्त व्याघ्रमोक्षणवृत्तान्तादयोप्यनुसन्धेया ॥

एव भगवद्रामानुजमुनिनिरतिशयकृपाकटाक्षभाजनीभूतस्य तत एव हेतोर्निरवधिकश्रीवेंकटनाथकरुणापय पारावारपूरनीरनरायमाणस्यानन्ता-

यस्यातिविचित्राणि भगवत्कटाक्षविशेषभातितानि चरित्राण्यन्यतोऽवगन्तव्यानि ।

अनन्तार्यविषयानपि तद्गुणवैभवपरानिमान् श्लोकान् नित्यानुसन्धेया नित्थ जगुरार्या ॥

आम्नायवाचामपि मृग्यभूमा
श्रीवेंकटक्ष्माधरदिव्यधामा ।
देवोऽनुधावन् प्रददाति यस्मै
स्रज भजेऽनन्तगुरु तमाद्यम् ॥ १ ॥

यतीन्द्र पादाम्बुजचञ्चरीक
श्रीमद्दयापालदयैकपात्रम ।
श्रीवेंकटेशाङ्घ्रियुगान्तरङ्ग
नमाम्यनन्तार्य मनन्तकृत्व ॥ २ ॥

जायासहाय खननीय महातडाग-
मृद्भारवाहिवटुवेष वृषाचलेन्द्रम् ।
श्रीवेकटेश धृतदत्त मनोज्ञगन्ध-
स्रगन्धिकन्धरमनन्तगुरु प्रपद्ये ॥ ३ ॥

श्रीवेंकटेश मचिरम्मयमाननिर्य-
त्सौरभ्यगुम्भ सुमनोभिरनन्यबुद्ध्या ।
आह्लादयन्निजघनोपवनोदिताभि
श्रीमाननन्तगुरु रन्वहमाविरास्ताम् ॥ ४ ॥ इति ।

अयचानन्तार्य. अतिमात्र भगवद्रामानुजमुनि दिव्यचरणारविन्द प्रवणमानसः तस्यवादिविजयघाटीष्वनुसन्धेय बिरुदप्रबन्धात्मक श्लोकपञ्चक तदीयमङ्गलावहतया नित्यानुसन्धेयं मङ्गलाशासनदशकम् । श्रीमुखसूक्ताख्य द्राविडब्रह्म सहिताध्ययनारम्भ कालानुसन्धेयमेतद्विषय मन्त्ररूपद्राविडगाथाविशेषच प्राणैषीत् ।

एतस्य कुमारो रामानुजनामानन्तार्यसमानकैङ्कर्यरसः तेन भगवद्दिव्यालयस्य दक्षिणपश्चिमायां दिशि निर्मितं तदाचार्यं श्रीरामानुजमुनिनामाङ्कितं दिव्यारामतडागादिकं दृष्ट्वा स्वयमुत्तरपूर्वायां दिशि तथैव स्वाचार्यसबन्ध्यनन्तपुरुषनामाङ्कितं तडागारामादिकमपरमपि कुर्वन् तेनसहैव भगवन्तं श्रीवेंकटनाथमनुदिनं सर्वविधकैङ्कर्येण सम्यगानन्दयन्नासीत् ॥

इत्थमनन्तार्योऽनेकानि भगवत्कैङ्कर्याणि कुर्वन्ननेकान् विष्णुधर्मांश्च प्रवर्धयन्नासीत् ॥

**इत्यनन्तार्यगुम्भितायां श्रीवेंकटाचलेतिहासमालायां षष्ठस्तबकः ।**

---

श्रीः

**अथ श्रीवेंकटाचलमाहात्म्यपरिशीलन तत्पर्वतासाधारण कतिपय धर्मविशेषव्यवस्थापनवृत्तान्तः उच्यते ।**

श्रीवेंकटाचलमाहात्म्यविषयपुराणभागान् समन्ततः परिशीलयन् भगवान् रामानुजमुनिः ।

वैकुण्ठलोकाद्गरुडेन विष्णोः
क्रीडाचलो वेंकटनामधेयः ।
आनीयच स्वर्णमुखीसमीपे
संस्थापितो विष्णुनिवासहेतोः ॥ इति मार्कण्डेयपुराण-
द्वितीयाध्यायवचनेन

वाराहपुराणान्तर्गतप्रथमभागे चतुस्त्रिंशाङ्कचिह्नित द्वितीयाध्यायस्थैः ।

धरावराहदेवोऽपि लोकानुग्रहकाम्यया ।
भूमौ स्थातुं स्थलं दिव्यं बुद्ध्या निश्चित्य माधवः ॥

गरुडं प्रेषयामास गिरिमानेतुमद्भुतम् ।
वैनतेय महासत्व गच्छ त्वमतिवेगतः ॥

गत्वातु परमं धाम क्रीडाचलमिहानय । इति वचनैः ।
वैनतेयोऽपि परमं धाम गत्वा ददर्शह ॥

अप्राकृतममेयंच सर्वरत्नमयं गिरिम् ।
हिरण्मयं महाशृङ्गं पञ्चोपनिषदात्मकम् ॥ इतिवचनैः ।

नारायणगिरिं नाम्ना क्रीडाद्रिं परमेष्ठिनः ।
योजनत्रयविस्तारं त्रिंशद्योजनमायतम् ॥

शेषाकारं हरेश्शेष शेषिणं सर्वदेहिनाम् ।
दिव्याकारं महापुण्य पश्यता मोक्षदायकम् ॥

एव रूप गिरिश्रेष्ठ स्कन्ददेशे निधाय तम् ।
परिवारैरुपेतच भगवत्परिचारकैः ॥

आजगाम महावेगात् गरुड काञ्चनप्रभ । इति वचनै ।

तत्रैव षट्त्रिंशाङ्कचिह्नित चतुर्थाध्यायस्थेन—

'वैकुण्ठादागतत्वेन वैकुण्ठाद्रिरिति स्मृत '

इति वचनेनच श्रीवैकुण्ठवर्ति पञ्चोपनिषन्मयाप्राकृतभगवत्क्रीडाचलरूपतया सुप्रसिद्धः । तदध्यायस्थेनैव—

'अयं कदाचिद्देवानां श्रीनिवासइवाबभौ ।
श्रीनिवासगिरि प्राहुस्तस्मादेन दिवोकस ' ॥

इति वचनेन श्रीपतिदिव्यमङ्गलविग्रहरूपतयापि कदाचित् देवाना भासमानत्वेन प्रसिद्ध ॥

ब्रह्माण्डपुराणे द्वितीयाध्याये—

अथाह भगवाञ्छेषमाहूय पुरत स्थितम् ।
मेघगम्भीरया वाचा हर्षोत्फुल्लविलोचन ॥

**श्रीभगवान्**

अनन्त मत्प्रियो लोके नत्वदन्योस्ति कश्चन ।
तस्मान्मम प्रिय किंचित्कर्तव्य भवतानघ ॥

श्रुतहि भवता सर्वं नारदोदीरित वच ।
क्रीडासमुचिते देशे वस्तव्यमिति मे मति. ॥

तत्र भूत्वा गिरिवरो भवान् वसतु भूतले ।
त्वत्फणामण्डलभुवि स्थातव्य रमया सह ॥

**शेषः**

अनन्तोऽहं महादेव स्थास्यामि गिरिरूपधृक् ।
भवांस्तु रमया सार्धं गिरिसानुषु रम्यताम् ॥

इति वचनैः अनन्तरूपतया अवगम्यमानः । पुनस्तत्रैवाध्यायान्ते—

अगस्त्याद्या मुनिवराः स्तपसः सिध्यपेक्षया ।
तपांसि सुचिरं तेपुः तन्निर्झरसमाप्लुताः ॥

विष्णोरपरदेहत्वादाक्राम न्नपदैः गिरिम् ।
नारायणांशसंभृत शेषोऽहिर्गिरिरूपधृक् ॥

इति वचनैः शेषविग्रहरूपतया भगवद्दिव्यमङ्गलविग्रहरूपतयाच प्रतिपन्नः । वामनपुराणे एकविंशाङ्कचिह्नित द्वितीयाध्याये—

'शुकाद्या मुनयः केचिद्भृग्वाद्याश्च तपोधनाः ।
प्रह्लादप्रमुखाः पुण्याः अम्बरीषादयो नृपाः ॥

विष्णोरेवापरं देहं मन्वानास्तं नगोत्तमम् ।
पद्भ्यामाक्रमितुं भीताः पर्यन्तेष्वेव वर्तनाः ॥

तन्निर्गतनदीष्वेव कुर्वाणाः स्नानतर्पणे ।
तपः कुर्वन्ति वाञ्छन्तः साक्षात्कर्तुं जनार्दनम् ॥

इति वचनैरपि तत्त्वज्ञप्रधानैः शुकादिपरमर्षिभिः प्रह्लादप्रमुखैः परमभागवतैः अम्बरीषादिराजर्षिभिश्च श्रीविष्णुदिव्यमूर्तिबुध्या प्राकृतशरीरेण पद्भ्याचाक्रमितुं भीतैरधस्तादेवावस्थाय परमात्मानं साक्षात्कर्तुं चिरं तपश्चरद्भिः श्रीमन्नारायणदिव्यमङ्गलविग्रहरूपतया अनुसन्धीयमानत्वेनच प्रतिपन्नः श्रीवेंकटाद्रिरित्यंशः निवृत्ताविद्या दिव्यसूरयोऽपि प्राकृतशरीरेण पद्भ्याच श्रीवेंकटाद्रिस्पर्शमनर्हं मन्यमानाएवाधस्तादेव स्थिताः भगवन्मङ्गलाशासनं चक्रुरित्यंशः श्रीवेंकटाद्रेर्मेरुपुत्रत्वशेषमारुतसंवादविधूतत्ववादस्तु कल्पभेदमात्रनिबन्धन इत्यंशः तदाऽपि श्रीरामकृष्णादीनां दशरथवसुदेवादि पुत्रत्वेऽपि स्वासाधारणाप्राकृतदिव्यरूप भगवदवतारत्ववत् श्रीवैकुण्ठवर्ति क्रीडाद्र्यवताररूपत्वं शेषानुप्रवेशभगवदनुप्रवेशकृत तदीयविग्रहरूपत्वंचास्य मेरुपुत्रस्यैव

सतो नासंभवदुक्तिकम् । साक्षाद्गरुडेन वैकुण्ठादस्यानयन मेरुपुत्ररूपेणावतीर्णस्य तस्य शेषमारुतसवादव्याजेनानयनचेत्येतावन्मात्रमेव वैषम्य कल्पभेदायत्तम् अत एव—

वेंकटाद्रिरिति ख्यात सर्वलोकनमस्कृत ।
मेरुपुत्रो महापुण्य सर्वदेवाभिवन्दित ॥

वैकुण्ठलोकादानीतो विष्णो क्रीडाचलो महान् ।
गरुत्मता वेगवता स्वर्णमुख्यास्तटे शुभे ।
वर्तते देवसङ्घैश्च ऋषिसङ्घैश्च पूजित ॥

इति वेंकटाद्रे कल्पद्वयसिद्ध मेरुपुत्रत्व गरुडानीत वैकुण्ठलोकक्रीडाचलत्वयोर्द्वयोर्धर्मयो एकविशेष्यसद्भावप्रतिपादनपर स्कान्दपुराणसप्तत्रिंशाङ्कचिह्निताध्यायवचनद्वय सगच्छते ।

एवमेव स्वामिपुष्करिण्या श्रीवैकुण्ठवर्तिक्रीडावापिकारूपाया: सरस्वत्यवताररूपत्ववर्णनमपि न विरुध्यते । क्वचित्कल्पविशेषे दुश्चरतपश्चर्याकारिण्या सरस्वत्या तात्कालिकमनोरथविशेषपूर्तये स्वामिपुष्करिण्यामनुप्रवेशमात्रस्य भगवता अनुज्ञातत्वमात्रेण तादृशप्रवादोपपत्ते । नचैतावन्मात्रेण श्रीवेंकटाचलस्य स्वामिपुष्करिण्यावा प्राकृतत्वशङ्कालेशावकाश । अन्यथा तयो समन्तत सर्वतोमुख सङ्घोघुष्यमाण लोकोत्तीर्णपरमपावनाप्राकृत पञ्चोपनिषत्तत्त्वमय भगवदत्यन्तप्रियवस्तुरूपताया अनुपपन्नत्वादित्यशच स्वयमनुसन्दधान परेभ्यश्च सविस्तरमभिदधानश्च सन् तत एव हेतो पूर्व कस्याचित् यात्राया दिव्यसूरिवदेव स्वयमपि श्रीवेंकटाद्रे पद्भ्यामाक्रमणमसहमानोऽधस्तादेव चिरकाल स्थित्वा श्रीशैलपूर्णार्यानन्तार्यादिभि विशेषत संप्रार्थितोऽपि मुहुर्मुहुर्गन्तुमनभ्युपगच्छन् श्रीवेंकटाचलमाहात्म्यपर स्कान्दपुराणान्तर्गत प्रथमभागस्थ नवमाध्यायवचनै — •

वेंकटाद्रि गिरि त तु प्रार्थयेत्पुण्यवर्धनम् ।
स्वर्णाचलमहापुण्यसर्वदेवनिषेवित ॥

ब्रह्मादयोऽपि यं देवा सेवन्ते श्रद्धया सह ।
त भवन्तमह पद्भ्यामाक्रमेय नगोत्तम ॥

क्षमस्व तदघ मेऽद्य दयया पापचेतस ।
त्वन्मूर्धनि कृतावास माधव दर्शयस्व मे ॥

प्रार्थयित्वा नरस्त्वेव वेंकटाद्रि नगोत्तमम् ।
ततो मृदुपद गच्छेत्पावन वेकटाचलम् ॥

इत्येव रूपै श्रीवेंकटाद्रे प्रकारविशेषेण कथञ्चिदारोहणाभ्यनुज्ञान-सद्भावच चिन्तयन् कथञ्चित् सकृत्सकृत् भगवन्तमद्रिमारुह्य वन्दमान विशेषत श्रीपदपुर्यामेव निवासशील शैलोपत्यकायामेव श्रीशैलपूर्णार्यसन्निधौ श्रीरामायणपठनमुपचक्रमे ॥

तत इत्थ श्रीवेंकटाचलवैभवातिशय शास्त्रे प्रतिपन्न सम्यगवगछन्नय श्रीरामानुजमुनि स्वस्य श्रीरामायणाचार्यभूत श्रीशैलपूर्णार्य स्वस्यप्रिय-शिष्यभूत श्रीशैलानन्तार्यचोभावेवैतो श्रीवेकटनाथवैभवच सम्यग्विज्ञाय अपचारमन्तरेण श्रीवेकटनाथकैकर्य तदीयनिरतिशयसुखोल्लासकर कुर्वाणौ विलोक्य स्वयमपि सतुष्यन् अन्यान् सर्वान् प्रायशोऽत्यन्तापचारपरायणाश्च पश्यन् तत खिद्यन् तेषा तादृशविरुद्धप्रवृत्तिमूलापचारपरिहाराय काश्चि-द्व्यवस्था. कर्तव्या इति मन्वान श्रीशैलपूर्णार्यश्रीशैलानन्तार्यावाहूय भो आर्यौ श्रीवेकटाचले तद्वैभवानभिज्ञाना जनाना स्वछन्दप्रवृत्तिमूलापचारप-रिहाराय काश्चिद्व्यवस्था कल्पयितुमिच्छामि । ताश्च युवाभ्यामिहावश्य निर्वर्तनीया इतिच प्रार्थयामि ।

केचित्कैकर्यनिरता केचिद्ब्रह्मणि निष्ठिता ।
ध्याननिष्ठास्तपोनिष्ठा केचिदुद्यानकारिण ॥

विग्रहालोकनपरा स्तत्रासन्मुनिपुगवा ।
केचिद्गिरौ स्थिताश्चैव नित्यमीश नमन्तिच ॥

गिरे. परिसरे केचिन्न्यवसन्नित्यमेवहि ।
पुनरप्यागमिष्याम इति जग्मु परे तदा ॥

अगस्त्यो भगवांस्तत्र श्रीमद्वेंकटनायकम् ।
अर्चयन्विविधै पुष्पै : कृत्वा चोद्यानमुत्तमम् ॥
चिरकाल महाभाग सहशिष्यैर्महामुनि ।
पिबन्नानन्दपीयूषं न्यवसद्वेंकटाचले ॥

इति वाराहपुराणप्रथमभाग त्रिपञ्चाङ्कचिह्नितैकविशोऽध्यायवचनै भगवतस्संनिधावेव कर्तुमर्हानसन्निधौ कर्तुमनर्हांश्च भगवन्मुखोल्लासहेतुव्यापारान् कुर्वतामधिकारिविशेषाणामेव वेंकटाचलोपरि सततसस्थितेरवगमेन अतथाविधा अधस्तादपि कर्तु शक्येषु गुणानुभवादिव्यापारेषु निष्ठावन्त' अधस्तादेव स्थातुमर्हन्ति । उत्सवादिकालेष्वेव पर भगवत्सेवार्थमूर्ध्वं गन्तुमर्हन्ति नान्यथेति व्यवस्था कर्तव्या ।

एव ।

कन्दमूलफलाद्याश्च नोपभोज्यास्स्वतन्त्रत ।
तत्रोत्पन्नास्तु राजेन्द्र यतस्त्वप्राकृतो गिरि ॥

इति स्कान्दपुराण सुवर्णमुखरीमाहात्म्यभागस्थवचनेन अप्राकृते श्रीवेंकटाचले समुत्पन्नाना भगवन्निवेदनयोग्यतया शास्त्रसिद्धाना कन्दमूलादीना सर्वेषामेव पदार्थाना श्रीवेंकटनाथायानिवेद्यानुपभोज्यतावर्णनात् ।

कन्दमूलादिवस्तूनि भोज्यानिच हवींषि च ।
निवेद्य पुरतो विष्णोस्तत्प्रसादोपजीविन ॥

इतितत्प्रकरणएव पुन कथनाच्च । देवालययोग्यतया विष्णवागमसिद्धाना सकलपदार्थाना स्थलवासिनो देशान्तरादागताश्च जना भगवद्दिव्यालयएव पाक कारयित्वा श्रीवेंकटनाथाय निवेदनं कारयित्वा तन्निवेदितस्यैव हविरादेः स्वगृहार्चामूर्तीनामपि निवेदन कृत्वा तादृशेनैव हविरादिना तत्तत्कालोचित हव्यकव्यादिकर्मस्वस्वदेहयात्रांच कुर्युरित्यपि व्यवस्था कर्तव्या ।

एव—

देवार्पितै र्गन्धमाल्यै र्हविषा च महर्षयः ।
आचरन्तोऽर्चना विष्णोरूषुस्तत्र महीधरे ॥

इति ब्रह्मोत्तरखण्ड सप्तमाध्यायगतेन वचनेन गृहार्चामूर्तीनां श्रीवेंकट-नाथसमर्पितगन्धमाल्यादिभिरेवार्चनानुष्ठान प्रतिपादनेन देवारामादिषु स्वातन्त्र्येण पुष्पादिग्रहणं गृहार्चाविग्रहाराधनार्थमकृत्वा श्रीवेंकटनाथार्थमेव पुष्पादीनि नीत्वा तस्मै समर्पितान्येव माल्यादीन्यानीय स्वस्वगृहार्चामूर्तीनामपि समर्प्य तान्येव जना स्वयमप्युपयुञ्जीरन्निति व्यवस्था च कार्या ॥

इदमुपलक्षणीकृत्य भोग्यतया क्रियमाणपय परमान्नपायससूपापूपादीनपि क्षेत्रवासिनो जना स्वस्वगृहेष्वकारयन्तो भगवद्दिव्यालयएव कारयित्वा भगवते श्रीवेंकटनाथाय निवेद्यैव गृह्णीयुरिति देवालयायोग्यान् शाकशलाटुप्रमुखान् अन्नच 'कलावन्नगतप्राणा प्राणिन सर्व एवहि' इत्युक्तरीत्या कलौ सर्वेषा जनाना अन्नाधीनप्राणधारणतया देवालये यथापेक्षाकाल लाभासभवेन क्षुन्निवारणस्यावश्यकर्तव्यत्वेनच स्वस्वगृहेषु कारयेयुरितिच व्यवस्था कार्या।

एव श्रीवेंकटाद्रौ वसता जनाना देहवियोगकाले प्राप्ते प्रागेवाधस्तान्नयन कार्यमिति, अचिन्तितदेहवियोगे प्राप्ते तथाभूतप्राणिदेहा अधस्तादेव नीत्वा सस्कार्या इतिच व्यवस्था कार्या ।

एव—

मृगपक्षिशुकादीना रूप कृत्वा परात्पर. ।<br>
क्रीडते रमया सार्धं सूरिभिस्तत्र पर्वते ॥

इति वाराहपुराणप्रथमभागस्थ चतुश्चत्वारिंशाङ्कचिह्नित द्वादशाध्यायस्थ-वचनेन—

मृगवा पक्षिण दृष्ट्वा गन्धर्ववा दिवौकस ।<br>
असावेव हरिश्चेति विस्मयोत्फुल्लमानस. ॥<br>
अनुजग्मुर्गिरौ तस्मिन् दिदृक्षासक्तचेतस ॥

इति तदध्यायस्थेनैव वचनान्तरेणच श्रीवेंकटाद्रौ विहरता मृगपक्ष्यादीनां भगवद्रूपतया संभावनीयतावगमेन तामसपुरुषैस्तेषां हिंसा न कर्तव्येति

भगवदुत्सवे दिव्यलियोग्यदिव्यनगरवीथिषु चरता पादुकावाहनाद्यारोहणं न कर्तव्यमिति ।

इममुत्सवमुद्दिश्य सेवार्थं यस्तु वासत ।
क्रमने पदमेक तु गन्तु शेषगिरिप्रति ॥

पदस्यैकस्य तस्यैव फलं भवति तत्पदम् ।
वेंकटाचलयात्राया पदमेक मुनीश्वरा ' ॥

ब्रह्महत्यादि पापघ्न ससारार्णवतारकम् ।
गेहिकतु फल तस्यह्यवान्तरफलं भवेत् ॥

इति वाराहपुराणप्रथमभागैकपञ्चाशाङ्कचिह्नितैकोनविंशाध्यायवचनैः—

उत्सवेषु च देवस्य नारायणगिरिप्रति ।
गच्छन्ति ये नरा पुण्या तेषामपि फल शृणु ॥

यानित्वादधने पदानि च मुने नारायणाद्रिप्रति
स्तोक स्तोकमपि द्विजाअपि जनास्तेषा फल यच्छृणु ।

यावद्वेंकटशैलमात्मगृहत स्तावत्पदाना क्रमात्
प्रायश्चैव पदे पदे क्रतु फल भूयाद्भुवि प्राणिनाम् ॥

इति वामनपुराण त्रिचत्वारिंशाङ्कचिह्नित चतुर्विंशाध्यायवचनेनच ब्रह्महत्यादिपापनिवृत्ति भगवत्प्राप्तिलक्षण ससारनिवृत्त्यादिषु साधनतयोक्त श्रीवेंकटाद्रियात्रायामेव देहयात्राशेषभूतवाहनाद्यारोहणस्यानुचिततया अवगतत्वेन विशेषत श्रीवेंकटाद्र्यारोहणसमये पादुकावाहनाद्यारोहण न कर्तव्यमितिच व्यवस्था कर्तव्या ।

एव—

‘ चण्डालयवनाद्यैश्च पतितै पापिभिर्नरै. ।
नारोढु शक्यते दिव्योह्यप्राकृतशिलोच्चय ’ ॥

इति वाराहपुराणवचनेन ।

'चण्डालयवनाद्यैस्तु वेदब्राह्मैश्च नास्तिकैः ।
नारोढुमपि य शक्य पावन पर्वतोत्तम ।' इति वामन-
पुराणैकविंशाङ्कचिह्नित द्वितीयाध्यायवचनेनच चण्डालयवनपतितादिनीचाना
गिर्यारोहणयोग्यताया असत्त्वावगमात् चण्डालादिभिरेतत्पर्वतारोहण न कर्तव्य-
मितिच व्यवस्था कार्या ।

ईदृशविशेषाचारव्यवस्था श्रीवेंकटाद्रौ कियद्दूरप्रदेश इति चेत्—

'इति पृष्ट. शिव प्राह स्वामिन्नित्यच्युत वच ।
स्वामिस्त्वया सदा यत्र स्थीयते वेङ्कटेश्वर ॥

तत्रैव देव स्थानव्य मया वृषगिरीश्वर ।
इति पृष्ट पुन प्राह नीलमेघसमद्युति ॥
आकल्पच वसामीह वेंकटाह्वयभूधरे ।
त्वमप्यत्र मृडानीश महादेव वस प्रभो ॥
उपत्यकायामस्याद्रे शोचिष्केशदिगीश्वर ' ।

इति वाराहपुराण प्रथमभागस्थैकोनपञ्चाशाङ्कचिह्नित सप्तदशाध्याय-
वचनै श्रीवेंकटाद्रावाविर्भवन्त श्रीनिवास निषेवितुमागताना ब्रह्मरुद्रादीनां
प्रेषणसमये रुद्रे भवत्सन्निधौ मयावस्तव्यमिति श्रीवेंकटनाथ प्रार्थयति भग-
वता श्रीवेंकटाद्रेरुपत्यकाया योजनदूरविप्रकृष्टायामाग्नेयदिशि नित्यवास
कुर्वति नियमयता अप्राकृते श्रीवेंकटाद्रौ श्रीस्वामिपुष्करिणीप्रभृति कापिलती-
र्थपूर्वतीरपर्यन्तो भागो भगवत्सन्निधिरूपो देवतान्तरवासानर्ह इतिच प्रति-
पादनस्य कृतप्रायत्वात्

'वेंकटाद्रिसम स्थान ब्रह्माण्डे नास्ति किंचन ।' इति
श्रीमान् शेषगिरिश्चाय पावनानां च पावनः ॥

इति च श्रीवेंकटाद्रेः समततस्सर्वोत्कृष्टपरमपावनतया सर्वत्र प्रसिद्धत्वेपि

तीर्थस्य परितस्तीरे पुण्ये योजनमात्रके ।
तपः परममास्थाय न्यवसन् मुनिसत्तमाः ॥

निरन्तरं हर्षयुक्ता स्तत्प्रसादाभिलाषिणः ॥

इति वचनेन केचित्परमर्षय स्वामिपुष्करिणीं परितो योजनविस्तृतः प्रदेशो विशेषत परमपावनो भगवत्सान्निध्यविशेषशालीत्यध्यवस्य तत्र तपस्यन्तो नित्यवासमाकार्षुरिति सुवर्णमुखरीमाहात्म्यपरभागे प्रतिपादनाच्च श्रीस्वामिपुष्करिणीप्रभृति योजनदूरपर्यन्तमस्मिन् गिरो ईदृशविशेषाचारमर्यादा स्थापनीयतया अवगम्यते ।

इत्थ परमपावन श्रीवेंकटाद्रिस्थल श्रीवेंकटनाथदिव्यालयमेव समाव्य एतत्क्षेत्रवासिभि रन्यैश्चावश्यमनुष्ठेयतया॰ मया निश्चिता इमा व्यवस्था अस्मदभिप्रायानुरोधेन निर्वर्तयितु स्वयमेव भगवता श्रीवेंकटनाथेन सकल्प कर्तव्य· ।

एतासु व्यवस्थासु सतीषु प्रायशो जनानामपचारप्रसङ्गो न प्रसजेदिति मन्ये इत्यवोचत् ।

तत श्रीरामानुजमुन्यभिहितास्शास्त्रसम्मताश्च विशेषाचारव्यवस्था युक्ता मन्वानौ तौ श्रीशैलपूर्णार्यानन्तार्यौ भगवता श्रीवेंकटनाथेन अवश्यमिमा व्यवस्था निर्वर्तयितव्या इत्यनुसदधानौ भगवन्तमपि भगवन् यतिराजमनोरथ सफल कुर्या इति मनसा प्रार्थयामासतु । ततस्तद्रात्र्या श्रीशैलपूर्णार्यस्वप्ने भगवति श्रीवेंकटनाथे सम्मुखमागत्य भो श्रीशैलपूर्णार्य मन्नाथमुनेर्यतिराजस्य शासनानुरोधेन प्राक् केनचिद्धेतुना परित्यक्तयोरपि श्रीसुदर्शनपाञ्चजन्ययो पुनर्ग्रहणं यथा मदिष्टमासीत् तथा अधुनाऽपि तदीयव्यवस्थान्तराण्यपि मदि-ष्टान्येवेति भाषमाणे तमिम वृत्तान्तमाकर्ण्य प्रबुद्ध श्रीशैलपूर्णार्य तमिम वृत्तान्त पण्डितपामराणा सर्वेषा विदितं भगवतैव कारयितुमना परदिने भगवत्सनिधिमुपगम्य भो भगवन् श्रीवेंकटशैलनाथ श्रीनिवास सैषा भवता मम स्वप्ने कृता दिव्याज्ञा प्रत्यक्षत सर्वलोकविदिता कर्तव्येति प्रार्थयामास ॥ तदानी श्रीवेंकटनाथोऽपि कचनभक्तमाविष्ट. भो जना मदीयामिमा दिव्याज्ञा सर्वे भवन्त. समाकर्णयन्तु ।

अहं पुरा श्रीरामकृष्णाद्यवतारेषु वसिष्ठादिगुर्वाज्ञामिव अधुना श्री-भाष्यादिप्रबन्धनिर्माणमुखेन मदीय सर्वस्मात्परत्व सम्यक् प्रकाशितवतो मह्य सुदर्शनपाञ्चजन्यावपि प्रदत्तवत श्रीभाष्यकारस्यापि दिव्याज्ञामाहंत्यानुति-ष्ठामि । मामाश्रितास्सर्वेऽपि श्रीभाष्यकारदिव्याज्ञासिद्धान् सर्वान् व्यवस्था-विशेषान् मदभिमतान् ज्ञात्वा निश्शङ्क समाचरन्त्विति प्रोवाच ।

ततस्तत्रत्यास्सर्वेऽपि जना स्तामिमा श्रीवेंकटनाथदिव्याज्ञा समाकर्ण्य सहृष्टास्तदानीं श्रीवेंकटनाथस्य अन्तरङ्गकिंकरेण भगवत्प्रेरितेन बिम्बाधरनाम्ना अर्चकवर्येण श्रीशठकोपमुद्धृत्य सर्वेषा मस्तके निक्षिप्य भो भागवता अस्मिन् श्रीवेंकटाचले श्रीवेंकटनाथस्य अभिमता शास्त्रस्यचानुमता श्रीभाष्यकारकृता इमा व्यवस्था अनुतिष्ठन्तो जना भगवदत्यन्तप्रियतमा परमभागवता स्यु अननुतिष्ठन्तश्च जना भगवद्दिव्याज्ञारूप **वेदशास्त्रबाह्याः स्युरिति** नियमिता-स्सन्तो यथोक्ता श्रीरामानुजमुनिकृता व्यवस्था यथावदनुतिष्ठन्तोऽवर्तन्त ।

**अथ श्रीवेंकटाद्रौ पुष्पमालादिपरिग्रहनिषेधवृत्तान्त उच्यते—**

इत्थ भगवद्दिव्याज्ञया भगवद्रामानुजकृताश्शास्त्रानुगुणा विशेषतो भगवन्मुखोल्लासकरी व्यवस्था सर्वेषु जनेष्वकपटमनुतिष्ठत्सु श्रीशैल-पूर्णार्यशिष्ये कस्मिश्चिद्वैष्णवे प्रकृतिवश्यतया कस्मिश्चिद्दिवसे श्रीवेंकटना थाय असमर्पितामेव पुष्पमाला शिरसि दधाने स्थिते तद्रात्र्या श्रीशैलपूर्णार्यस्वप्ने भगवति श्रीवेंकटनाथे प्रत्यक्षत सम्मुखे स्थित्वा भो श्रीशैलपूर्णार्य भवच्छिष्य प्रकृतिवश्यस्सन् मम परिमलद्रोहमका-र्षीदिति ब्रुवाणे श्रीशैलपूर्णार्यस्तमिम वृत्तान्तं श्रुत्वा प्रबुद्ध परदिने भगवत्स-न्निधिं गत्वा भगवन्नित.प्रभृत्यन्वह भवन्माल्यानि कस्मैचिदपि न प्रदिश । कलिदोषेणानुकूलानामपि प्रतिकूलबुद्धिजननात् अस्मिस्थले बहुमर्यादाप्रसङ्गो भवेत् ।

भवति श्रीवेंकटाद्रौ कस्मैचिदपि मालामप्रदिशति जनाना भगवत्स-मर्पितामेव माला धारयामीति वञ्चनाकरणायोगेन राजदण्डभयादमर्यादाप्रस-

ज्ञस्य नावकाशोभवति ततश्चास्मिन् श्रीवेंकटाद्रौ पुष्पमालाधारणस्यैव प्रतिषेधे राजदंडवशतएव सिद्धेसति तत्पूर्वकप्राकृतसकलभोगोपि सकुचितो भवति ॥ अत' एतन्मदीयापेक्षितनिर्वर्तनाय दृढतर सङ्कल्प कुर्विति प्रार्थयामास ।

ततो भगवानपि श्रीनिवास तदीय विज्ञापन श्रुत्वा अर्चकमुखेन भो श्रीशैलपूर्णार्य मदीयार्चावतारपरिग्रहस्य आश्रितमनोरथपूरणैकफलत्वात् भवदीय-मनोरथनिर्वर्तनाय मया धृतानि पुष्पमाल्यादीनि अद्यप्रभृति न कस्मै दास्यामि । तत इत प्रभृति मया धृतोज्झितपुष्पमाल्यादीनि परिवारदेवेभ्यो देयानि वाप्यादिषु वा निक्षेप्तव्यानि इति स्फुटतरमाज्ञा चकार ॥

तत इमं वृत्तान्त शृण्वन् यतिराजोऽपि सतुतोष ।

**अथ श्रीवेंकटाद्रौ सर्वदा स्थित्वा श्रीवेंकटनाथदिव्यैश्वर्यपरि-पालनाय स्वप्रतिनिधितया प्रथम श्रीभगवद्रामानुजमुनिस्थापितस्य श्रीसेनापतियतिनाम्नो नैष्ठिकब्रह्मचारिण एकाङ्गिवर्यस्य वृत्तान्तः उच्यते—**

भगवान् श्रीरामानुजमुनि पूर्वोक्ताचारविशेषव्यवस्थाना करणानन्तर श्रीशैलपूर्णार्यशिष्यस्य कस्यचिद्वैष्णवस्य कलिदोषवशेन पूर्वोक्तव्यवस्थाविशे-षातिलङ्घनप्रसङ्ग च दृष्ट्वा यथावत्पूर्वोक्ताचारविशेषव्यवस्थाना स्वयमनुष्ठानाय स्थलवासिना तदा तदा दर्शितव्यवस्थाविशेषान् महाभ्युदयफलान् ज्ञापयित्वा तैरनुष्ठापनाय तदा तदा देशाधिपते राज्ञ श्रीवैष्णवधर्मोपदेशपूर्वक श्रद्धा सजनय्य तन्मुखेन श्रीवेंकटनाथदिव्योत्सवादिलक्षणैश्वर्यसमृध्यभिवर्धनाय च अस्मिन् दिव्यदेशे नियतस्थायिना विरक्ताधिकारिणा केनचिद्भवितव्यमिति चिन्तयन् श्रीशैलपूर्णार्यश्रीशैलानन्तार्यावुभावपि समाहूय भो आर्यौ अस्मिन् दिव्यदेशे श्रीवेंकटनाथदिव्यैश्वर्यपरिपालनाय लोकानामपचारपरिहाराभ्युदय-विशेषहेतुतया अस्मत्कृतविशेषाचारव्यवस्थाना यथावत्परिपालनाय च श्रीभग-वद्दिव्यालयसर्वपरिकरनियन्तृतया वैराग्यप्रधान कश्चिद्विलक्षणाधिकारी अस्मिन् दिव्यदेशे नियतवासी स्थापनीय इति चिन्तयामि ॥

भवद्भ्यां सततगुणानुभवकैङ्कर्यैकपरायणाभ्या भगवद्दिव्यालयपरिकर गुणागुणसाक्षात्करण तदनुगुणशिक्षणाद्यसहिष्णुभ्या तत्तत्कालेषु भगवद्दिव्यालये नियमित सन्निधाय तत्तत्कालोचितकार्यवैयाकुलीमूलपरिश्रमस्य दुस्सहतया दुष्करतया च भवन्नियाम्यतया भवदाज्ञानुविधायिन कंचित् यथोक्तकार्यनिर्वहणपर विरक्तमधिकारिण स्थापयितुमिच्छामि । तदत्र सम्मन्यमानाभ्या भवद्भ्या मयाऽद्य स्थाप्यमान पुरुष स्वाधिकारात्प्रमत्तो यथा न स्यात्तथाऽनुपालनीय । नचाहमत्रैव दिव्यदेशे नियत स्थातु शक्ष्यामि येनाहमेवैनमित्थमनुपालयेयमित्यभिधाय-- -

वर्णिनो नैष्ठिकी बुद्धिर्वैराग्ये यदि दृश्यते ।
सकल्प्य बुद्धि ता धीर काषाय धारयेत्पटम् ॥

इति पारमेश्वरसहितावचनोक्तरीत्या ब्रह्मचारिण आश्रमान्तरविरक्तस्योर्ध्वरेतसो मन्त्रपुरस्सर काषायवस्त्र धृतवत एव नैष्ठिकब्रह्मचारिरूपत्वात् तादृशोऽधिकारी कश्चन सपादनीय इत्यभिदधान तदानीमनन्तार्यशिष्यमेक ब्रह्मचारिण गुरुकुलवासश्रद्धालुतया सर्वदा तदीयसन्निधौ कैङ्कर्यैकपरायण वैराग्यशीलं दृष्ट्वा तमाहूय हितोपदेशं कृत्वा स्वाभिमतपद्धत्या काषायशाटी परिगृहीतु श्रीवेंकटनाथदिव्यालये यथोक्तरीत्या सकलकैंकर्य निर्वर्तयितु चाभ्युपगमय्य अनन्तार्येणाप्यनुज्ञा तस्मै दापयित्वा नैष्ठिकब्रह्मचर्याङ्गतया यथोक्तवचनसिद्ध काषायवस्त्र यथाविधि मन्त्रपुरस्सर धारयित्वा विष्वक्सेनवद्भगवदीयसर्वकैङ्कर्यधुरधरतया सन्यासाश्रमाङ्गयोस्त्रिदण्डकाषाययोरेकस्य काषायवस्त्ररूपाङ्गस्य वैराग्यलक्षणस्य धारणेन च विष्वक्सेनैकाङ्गीति सेनापतियतिरितिच सज्ञा च दत्वा भो एकाङ्गिन्, यथा श्रीवेंकटनाथदिव्यैश्वर्यस्य यथा हानि नस्यात् यथा च भगवत्सन्निधिकैंकर्यपरा नापचार कुर्यु, तथा हितोपदेश कृत्वा तै स्वामिकैंकर्य निर्वर्तय ।

श्रीवेंकटनाथस्य भगवतो दिव्यमङ्गलविग्रहाय दिव्याधरायच अर्हान् सर्वानौपचारिकसास्पर्शिकाभ्यवहारिकानतिकल्याणतमान् भोगान् यथा-

विधि निर्वर्तय। देशाधिपतेर्भगवद्धर्माभिरुचिं तदा तदा तन्निकटं गत्वा प्रवर्धय। तन्मूलकतया प्रमुषितान् धर्मानाविर्भावयन् अपूर्वांश्च तत्तद्देशकालसमुचितान् धर्मान् सजनयन् विद्यमानांश्च धर्मानभिवर्धयन् श्रीशैलपूर्णार्यानन्तार्ययोः श्रीवेंकटनाथनिरतिशयकैंकर्यधुरधरयोः निरतिशयभगवत्प्रीतिभाजनयोराज्ञां च शिरसा अनुवर्तयन् श्रीवेंकटनाथदिव्यैश्वर्यं सम्यक् परिपालयेति नियुज्य श्रीरामावतारे हनुमत एव भगवतो निरवद्यनित्यकैंकर्यधुरधरतया तदभिमानलाभाय तदीयदिव्यालयसंनिधावेव मठमपि वासाय परिकल्प्य श्रीरामायणग्रन्थशान्तिकाले श्रीशैलपूर्णार्यप्रसादितं स्वाराध्यभूतं भगवन्तं श्रीचक्रवर्तिकुमारमपि तत्र संस्थाप्य तदाराधनैकपरायणं च तं कारयित्वा भगवत्कैंकर्यधुरधरस्य श्रीचक्रवर्तिकुमाराराधनैकतत्परस्यास्य प्राक्तथाविधपदभागिहनूमत्सम्बन्धिलक्षणान्येव भगवत्कैंकर्यधुरन्धरस्वाभिव्यञ्जकासाधारणलक्षणानि समुचितानि हनूमदभिमानपोषकतया निरवद्यभगवत्कैंकर्यरक्षणपरिकरभूतानि चेत्यनुसंधाय हनूमन्मुद्राङ्गुलीयकमेकं हनूमन्मुद्राङ्किता भगवद्दिव्यालय कवाटबन्धनयन्त्रकुञ्चिकामेकां हनूमन्मुद्राङ्कितामेकां घण्टां हनूमन्मुद्राङ्कितपताकमेकं ध्वजं च निर्माप्य श्रीवेंकटनाथसंनिधौ समर्प्य तन्नियमनमुखेन तस्मै दापयित्वा ततः प्रभृति कैंकर्ययात्राकालेषु तद्घण्टानादेन तेन ध्वजेन च साकं गमनं कार्यमिति हनूमन्मुद्रागुलीयकेन कोशागार धान्यागार भगवद्दिव्यालयादि द्वारबन्धन कवाटयन्त्रेषु द्रव्यभूषणादिमञ्जूषासु विशेषतः संरक्षणीयसर्वस्थलेषु च रक्षणपरिकरतया मुद्रणं कर्तव्यमिति हनूमन्मुद्राङ्कितकवाटबन्धनयन्त्रकुञ्चिकया च प्रतिदिनं सायं प्रातः भगवदाराधनसमाप्तिकाले भगवद्दिव्यालयकवाटबन्धनयन्त्रयन्त्रणं कार्यमिति च सर्वतो भगवद्दिव्यैश्वर्यसंरक्षणार्थां व्यवस्थां कृत्वा स्वचरणकमलसेवकं यादवराजमाहूय भो यादवराज अनुदिनमभिवर्धमानमहाकलिकोलाहलबलेन श्रीवेंकटनाथदिव्यैश्वर्यस्य सर्वतः क्षतिमाशंकते मामकीनं चेतः। तदिमा व्यवस्था अहमकार्षम्। ता एता व्यवस्था यथाक्रमं निर्वर्तय। यथा चैते सर्वे परिजनपरिचारका अस्य विष्वक्सेनैकाङ्गिनो मत्प्रतिनिधितया मया नियमितस्य सर्वात्मना विधेयाः स्युः॥

यथा चैतदीयशासनातिलङ्घने स्वाधिकारात्प्रच्यावनीयाश्च स्यु तथा त्व निपुणतरोग्रशासनपत्रिकां सुदृढा कुर्या । एवमीदृशाधिकारिण· कदाचिदतिपत्तौ स्वाधिकारादनवधानतोऽतिवृत्तौ वा ममापि माननीययो रतिमहतोमहनीययो· श्रीशैलपूर्णार्यानन्तार्ययोरनुमतिमादृत्य अन्य एव तादृश कश्चित्तत्स्थाने स्थाप्यताम् ॥

ईदृशस्य कस्यचिदधिकारिणोऽसत्त्वे स्वामिकैंकर्य निरवद्य न निवर्तेत । तस्मादवश्यमेव यथोक्तरीत्या शाशनपत्रिका कर्तव्येति नियम्य तेन तादृशशासनपत्रिका च कारयित्वा सर्वानर्चकपरिचारकान् साधिकारिणस्तस्य एकाङ्गिनो विधेयान् कारयित्वा तेन सर्वमपि श्रीवेंकटनाथकैंकर्य यथामनोरथ निर्वर्तयामास ॥

इत्थ श्रीरामानुजमुनि स्वस्थाने श्रीसेनापतियत्यपरनामान विष्वक्सेनैकाङ्गिन स्थापयित्वा श्रीशैलपूर्णार्येण स्वस्मै प्रसादित श्रीचक्रवर्तिकुमारमपि तेनाराधनीय व्यवस्थाप्य निश्चिन्तहृदय· प्रागेव श्रीपदपुर्या प्रतिष्ठापितस्य श्रीगोदादेवीसमेतस्य श्रीचित्रकूटाधिनायस्य श्रीगोविन्दराजस्यापि दिव्यैश्वर्यं निर्विघ्न निर्वर्तनीयमिति यादवराजमाज्ञाप्य श्रीरङ्गनगरी गत तदातदा श्रीवेंकटाद्रिवैभव विचारयन्नासीत् ।

## अथ श्रीवेङ्कटाद्रौ श्रीभगवद्रामानुजमुनिस्थापित श्रीवेंकटनाथशठकोपयतीन्द्र वृत्तान्तः उच्यते ॥

श्रीशेषावतारभूत श्रीभगवद्रामानुजमुनि सकलदिव्यदेशपरिरक्षणैकपरायण श्रीवेंकटाद्रिदिव्यदेशप्रत्यपि कृतासु बह्वीषु यात्रासु प्रथमयात्राया विट्ठलदेवनामान कंचिद्राजानमन्तरङ्ग किंकरीकृत्य तन्मुखेन वृत्त्यर्थ बालमण्डयनामानं कंचननदीमातृक ग्राम दापयित्वा निजचरणकमलसमाश्रितान् कतिपयश्रीवैष्णवान् श्रीपदपुर्या आवासयन् तेभ्यस्सकलतत्त्वार्थानुपदिशन् दिव्यसूरिवत् पुराणसिद्धशुकादिपरमर्षिगण प्रह्लादादि भागवतगणाम्बरीषादि राजर्षिगणवच्च श्रीवेंकटाद्रि श्रीशेषावताररूपतया श्रीवैकुण्ठलोकागताप्राकृत-

भगवत्क्रीडाचलरूपतया भगवतो विष्णोरेव दिव्यमूर्तिरूपतया च पुराणप्रतिपन्नं स्वयमप्यारोढुमसमन्यमानोऽध प्रदेशादेव श्रीवेंकटनाथमङ्गलाशासनमपि कुर्वाण उपत्यकायां श्रीपदनगर्यामेव कंचित्काल स्थित· तत· श्रीवेंकटाचलादवरुह्य बहुभि· श्रीवैष्णवैस्सह समागतेन प्राग्द्राविडब्रह्मसहितार्थान् व्याख्यानकालक्षेपसमयकृतस्वीयदिव्याज्ञयैवेह समागत्य नन्दनवनतडागादि कैकर्यं कृत्वा अनुदिनमतिसुरभितुलसिकाकुसुममालिकादि समर्पणकैकर्येण भगवन्तमानन्दयता ततो निरतिशयभगवत्करुणाप्रवाहपरिणाहभाजनेन अनन्तार्येण बहुधा अभ्यर्थित श्रीवेंकटगिरिमारुह्य भगवद्दिव्यालयस्य दक्षिणपश्चिमाया दिशि स्वनियमनानुरोधिना अनन्तार्येण कृतनन्दनवनतडागादिकमभिवीक्ष्य सतुष्ट· त करुणाशीलकटाक्षधारासार सेचनालिङ्गनादिभिरभिनन्द्य स्वामिपुष्करिण्यां स्नात्वा श्रीवराहभगवन्त श्रीवेंकटनाथचाभिवन्द्य श्रीभगवद्यामुनमुनिनियमनेन चिरकालात्प्रागेवेह समागत्य भगवदभिषेकतीर्थानयनादिकैङ्कर्येण श्रीवेंकटनाथमानन्दयत स्वमातुलस्य श्रीशैलपूर्णार्यस्य नियमनेन दिनत्रयमनशन एवोपरि भगवन्तमभिवन्दमान स्थित्वा ततोऽवरुह्य श्रीपदपुर्यामेव सवत्सरमुषित्वा श्रीशैलपूर्णार्यसमीपे श्रीरामायणविशेषार्थानधिगम्य तत्तत्कालसमुपस्थित कैङ्कर्यविशेषाश्च कुर्वाण पुन श्रीरङ्ग जिगमिषु श्रीवेंकटनाथमभिवन्द्य लब्धानुज्ञ स्वविरहासहिष्णवे स्वात्यन्तप्रियशिष्यायानन्तार्याय यथाविधि स्वीयदिव्यमङ्गलविग्रह कंचिदवतार्य सम्यगालिङ्ग्य दत्वा श्रीशैलपूर्णार्यात् गोविन्दभट्टार्यमुदकधारापूर्वक लब्ध्वा तमपि नयन् सपरिवार श्रीरङ्गमेव जगाम ॥

ततोऽपरस्यां यात्राया स भगवान् श्रीरामानुजमुनि शैवजनकृत श्रीवेंकटनाथदेवतान्तरत्ववादकोलाहलपरिहारार्थमागतो निर्धूतनिखिलशैववादकोलाहलो देशाधिपति ·यादवराजमन्तरङ्गकिंकरीकृत्य विमानमण्डपगोपुरादिकैकर्याणि कृत्वा श्रीचित्रकूटाधिनाथं श्रीगोविन्दराज देवाधिदेवेन सह क्रिमिकण्ठचोलोपद्रवत आगतं श्रीपदपुर्यां प्रतिष्ठाप्य तदीयमहिषीत्वेन भूदेवीरूप वामहस्तविलसत्कह्लारा श्रीगोदादेवी भगवतो दक्षिणपार्श्वे प्रतिष्ठाप्य तदीयमहोत्सवादीन् श्रीवेंकटनाथदिव्योत्सवाविरोधे निर्वर्तनीयान् व्यवस्थाप्य

तत्कालप्रसक्तान्यनेककैंकर्याण्यपि कुर्वाण पुनः श्रीरङ्ग जिगमिषु· श्रीशैल-पूर्णार्यानन्तार्यौ पुरस्कृत्य श्रीवेंकटाद्रौ श्रीरामदूतस्य हनूमतोऽग्रे मठ कंचित् निबध्य तत्र प्राक् स्वस्य श्रीरामायणशान्तिकाले श्रीशैलपूर्णार्येण प्रसादीकृत श्रीचक्रवर्तिकुमार तत्र स्थापयित्वा स्वप्रतिनिधितया तदाराधनाय श्रीवेंकट-नाथसर्वकैंकर्यनिर्वाहायच अनन्तार्यशिष्य गुरुकुलवासश्रद्धालुतया तदीयस-निधावेव सततकैंकर्यपरायण कंचन नैष्ठिकब्रह्मचारिण पारमेश्वरसहितोक्तरीत्या यथाविधि काषायशाटिकाप्रदानेन एकाङ्गिशब्दाभिलपनीय सेनापतियति-नाम्ना सज्ञित हनूमन्मुद्राङ्किताङ्गुलीयकघण्टाध्वजकुञ्चिकादि कतिपयविशेष-लक्षणसपन्न कारयित्वा तस्मिन्मठे सस्थाप्य यादवराजेन श्रीवेंकटनाथदिव्या-लयसबन्धिन सर्वान् परिजनपरिचारकान् साधिकारिण सर्वात्मना तस्य विधेयभावमापन्नान् कारयित्वा श्रीशैलपूर्णार्यानन्तार्यवशवर्तिन च त कारयित्वा तावनुज्ञाप्य स्वयं निश्चिन्तहृदय श्रीरङ्गनगर जगाम ॥

इत्थ विष्वक्सेनैकाङ्गिना श्रीसेनापतियत्यपरनाम्ना श्रीशैलपूर्णार्या-नन्तार्याभ्यामनुपाल्यमानेन यथाविधि श्रीवेंकटनाथसर्वकैङ्कर्यजात निर्वर्त्य-मानमाकर्णयन् श्रीरामानुजमुनि तदा तदा आगत्य स्वयमपि सपश्यन् सतु-तोष ॥

तत· कस्याचिद्यात्राया स भगवान् रामानुजमुनि श्रीवेंकटाद्रिमा-गत्य श्रीवेंकटनाथमभिवन्दमानस्तदानी विंशत्युत्तरशतद्वयाधिक चतुस्सहस्री-संख्येषु [४२२०] कल्यब्देषु एकचत्वारिंशदधिक सहस्रसख्येषु [१०४१] शालिवाहनशकाब्देषु च गतेषु स्वात्मान द्व्याधिकशतवर्षवयस्क जानन्न-नन्तार्यमाहूय भो अनन्तार्य द्व्याधिकशतवर्षवयस्कोऽहमभूवम् । इत परमि-हासकृदागन्तुं न शक्ष्यामि । श्रीशैलपूर्णार्यश्च सपुत्र एव परमपदमगात् । तस्मात् त्वमेक एवाद्यात्र श्रीवेंकटनाथकैंकर्यधुरधर· षट्षष्टिवर्षवया वृद्ध-शिराश्चासि । अतः त्वमेव चात्रत्यान् सर्वान् श्रीवेंकटनाथकैंकर्यपरान् निर्वोढु-मर्हसि ।

अयंच तावकीन सेनापतियत्यपरनामा विष्वक्सेनैकाङ्गी मदीय-श्रीचक्रवर्तिकुमारभगवदाराधकतया श्रीवेंकटनाथकैंकर्यधूर्वहतयाच प्राज्ञया नियमितो नैष्ठिकब्रह्मचारीचैकाकी सर्वकैङ्कर्यभार वोढु न शक्नोति । अत एव परिव्राजकाश्रमेण सयोज्य प्रधानीकृत्य एतत्सहायतया त्रिचतुरानन्याने-काङ्गिनश्च कल्पयित्वा तांश्चैतदधीनान् कृत्वा तैस्सर्वै सम्यक् श्रीवेंकटनाथ-कैंकर्य निर्वर्तयितुमिच्छामि ।

एव श्रीशठकोपदिव्यसूरे श्रीमुखसूक्ताख्य द्राविडब्रह्मसहिताया तृतीय-काण्डे तृतीये श्रीमुखसूक्ते श्रीवेंकटनाथस्य येन येन धातागच्छति तेन तेन सह गच्छती''ति श्रुत्युक्तरीत्या सर्वदेशसर्वकालसर्वावस्थासु सहचरीभूय समुचितसर्वविधकैङ्कर्याणि कुर्यामिति मनोरथ कुर्वाणस्य तथाविधमनोरथ-निर्वहणाय तन्नाम्ना कचनात्र स्थापयित्वा तेन श्रीवेंकटनाथसर्वविधकैङ्कर्य कार-यितु चिरात्प्रभृति काङ्क्षामि ।

तत एनमेव तावकीन सेनापतिनामान विष्वक्सेनैकाङ्गिन परिव्राजका-श्रमं प्रापय्य तन्नामयुत च कारयितुमिच्छामि इत्यभिधाय तेनानुमोदितस्सन् विकारिसवत्सरे मकरमासे शुक्लपक्षे शुक्रवासरे शुभमुहूर्ते विष्वक्सेनैकाङ्गिने यथाविधि परिव्राजकाश्रम दत्वा श्रीवेंकटनाथशठकोपयतीन्द्र इति सज्ञा च विधाय तमेव स्वमठे प्राधान्येन श्रीचक्रवर्तिकुमाराराधकतया निवेश्य तेनैवान-न्तार्यशिष्याणा चतुर्णामेकाङ्गिशाटीर्दापयित्वा तान् श्रीवेंकटनाथकैङ्कर्यैकपरा-यणान् तदनुयायिनश्च कृत्वा सर्वानेतान् सर्वात्मना अनन्तार्याधीनाश्च कारयि-त्वा यादवराजमाहूय भो यादवराज द्व्यधिकशतवर्षवया वृद्धोऽह इत पर यावद्देहपात श्रीरङ्ग एव वर्तितुमिच्छामि । असकृदिहागन्तुमपि न शक्नोमि, तस्मादेनमनन्तार्य पुरस्कृत्य "अनेन शठकोपयतीन्द्रेण चतुर्भिरेतैरेकाङ्गिभिस्स-मेतेन श्रीवेंकटनाथकैङ्कर्यं कृत्स्नमपि त्वमेव सम्यङ्निर्वर्तयितुमर्हसि ।

महाकलिदोषवशादास्तिकानामपि द्रोहबुद्धि सजायेत । अत एते-विरक्ता. कैङ्कर्यैकपरायणा कैङ्कर्यपरामर्शे विनियुक्ता श्रीवेंकटनाथद्रव्यायव्ययः

दिव्यभूषणादिविषये शठकोपयतीन्द्रसबन्धिजनैरप्येकं लेख्यं लेखनीयतया व्यवस्थाप्य मन्दिरकार्यदर्शिभिरधिकारिभिः भगवद्द्रव्यापहारो यथा न क्रियेत तथा व्यवस्था कर्तव्या ।

एते च चत्वार एकाङ्गिन प्राङ्नियमितस्य सेनापतियत्यपरनाम्न एकाङ्गिन एकस्य स्थाने परस्परसहकारितया तत्तत्कार्याणि सुखेन कर्तु नियमिता. । एतैस्सह सर्वकैङ्कर्यकारितया सकलकैङ्कर्यनिर्वाहधुरधरतयाच अय शठकोपयतीन्द्रो नियमित· ।

एतमनन्तार्य पुरस्कृत्य सर्वैरेतैर्यथावत्कैङ्कर्यजात निर्वर्त्यमानमनुपालयस्व ।

अय चानन्तार्या भगवतो वेंकटनाथस्य निरतिशयकृपापात्रभूतोऽस्मदत्यन्तप्रियतम शास्त्रार्थवित् शास्त्रार्थभूततत्तद्धर्माचारव्यवस्थापनकुशल आचार्यपदनिर्वाहितया अस्माभिर्नियुक्तश्च ।

तस्मादेन पुरस्कृत्य एतन्नियमनानुरोधेनैव सकलशास्त्रीय धर्ममर्यादा भगवन्मन्दिरे निर्वर्तनीया ।

ईदृश आचार्यपदनिर्वाहिण. पुरुषाश्च द्रिव्यदेशेष्ववश्य सत्कृत्य वशत· स्थापनीया । अन्यथा सकलशास्त्रोयधर्ममर्यादोच्छेदप्रसङ्गात् ।

अत एवचास्माभि शास्त्रीयधर्ममर्यादास्थापनाय विद्याभिजनादिभिर्माननीया चतुस्सप्ततिसिंहासनाध्यक्षा ब्रह्मविदग्रेसरा शास्त्रार्थप्रवचनपरा आचार्यपुरुषा समंतत सस्थापिता आचार्यपद निर्वहन्ति ।

उक्तंह्याचार्यलक्षण पाद्मोत्तरखण्डे प्रथमेऽध्याये—

आचार्यो वेदसपन्नो विष्णुभक्तो विमत्सर· ।
मन्त्रज्ञो मन्त्रभक्तश्च सदा मन्त्राश्रयः शुचि. ॥

सत्सप्रदाय सयुक्तो ब्रह्मविद्याविशारदः ।
अनन्यसाधनश्चैव तथानन्यप्रयोजनः ॥

ब्राह्मणो वीतरागश्च क्रोधलोभविवर्जित ।
सद्वृत्तौ शासिताचैव मुमुक्षु. परमात्मवित् ॥
एवमादिगुणोपेत आचार्यस्समुदाहृत. ।
आचारे शासयेद्यस्तु स आचार्य इतीरित' ॥ इति ॥

हारीत विशिष्टपरमधर्मशास्त्रेऽपि द्वितीयाध्याये उक्तम्—

आचार्य सश्रयेत्पूर्वमनघ वैष्णव द्विजम् ।
शुद्धसत्वगुणोपेत नवेज्याकर्मकारकम् ॥

सत्सप्रदायसयुक्त मन्त्ररत्नार्थकोविदम् ।
ज्ञानवैराग्यसपन्न वेदवेदाङ्गपारगम् ॥

शासितार सदाचारे सर्वधर्मविदा वरम् ।
महाभागवत विप्र सदाचारनिषेविणम् ॥

आलोक्य सर्वशास्त्राणि पुराणानि च वैष्णव ।
तदर्थमाचरेद्यस्तु स आचार्य इतीरित ॥ इति ॥

एव—

आचिनोति हि शास्त्रार्थानाचारे स्थापयत्यपि ।
स्वयमाचरते यस्तु स आचार्योऽभिधीयते ॥

इत्यादि वचनान्तराण्यपि द्रष्टव्यानि ।

इत्थमुक्तलक्षणा' आचार्यपुरुषा प्रतिदिव्यदेश तत्तद्दिव्यदेशधर्मपरिपालनाय अवश्य वशत सस्थापनीया' ।

ईदृशपुरुषाणामभावे दिव्यदेशधर्ममर्यादा विलुप्येरन्नेव । अतः ईदृशलक्षणसंपन्नानामग्रेसरमेनमनन्तार्यं पुरस्कृत्यैव तत्तद्धर्मकार्याणि इह निर्वर्तनीयानि ।

भगवत्परिजनपरिचारकेषु तत्तद्भगवत्परिचर्याकरणार्हानर्हताहेतुचरित्रविलोकनेन कदाचिदनेन, कस्यचित्परिग्रह परित्यागो वा ज्ञाप्यमानो निश्शङ्कमवश्यं कर्तव्य. ।

ईदृशाश्चाचार्यपदनिर्वाहिणः पुरुषास्तत्तद्दिव्यदेशसंरक्षण श्रीवैष्णवधर्माभिवर्धनैकप्रयोजना इत उपरिष्टादपि काले कदाचित् केचिदागताः इह वासरसिका भवन्तिचेत्तेऽप्येतद्दिव्यदेशपरिपालकतया सत्कृत्येह स्थापनीयाः ।

दुर्लभाहीदृशा पुरुषा । त एते माननीयतमा पुरुषा भगवद्दिव्यालयगोष्ठीसत्कारप्रसङ्गेष्वग्रत सत्करणीया मन्दिरोपजीविभ्य परिजनपरिचारकेभ्य ॥ तत्रापि बहूना समवाये यथायोग्य क्रमेण सत्कार कार्य । यथोक्त शाण्डिल्यविशिष्टधर्मशास्त्र चतुर्थाध्याये—

प्राप्तान् भागवतास्तत्र गुरुपूर्व यथाविधि ।
अर्चयेत्परया भक्त्या द्रव्यैरर्घ्यादिभिश्शुभै ॥ इति ।

यस्य यस्याधिक दृष्टा भक्तिर्ज्ञानक्रिया मया ।
त त समर्चयेत्पूर्व यथार्ह क्रमयोगत ॥ इति च ।

तस्मादिहाद्य वर्तनशीलस्य आचार्यपदनिर्वाहिणोऽनन्तार्यस्य सप्रतिनियमितस्य श्रीवेंकटनाथसर्वकैङ्कर्यधुरधरस्य शठकोपयतीन्द्रस्य तत्सहायतया नियमिताना तत्समशीलकैङ्कर्यनिर्वर्तनैकपरायणानाममाषामेकाङ्गिनाच यथार्ह क्रमेण सत्कार कार्यः पूज्यपूजाव्यतिक्रमस्य अपूज्याग्रिमपूजनस्य च महानर्थकरत्व महाभारत राजसूयसद प्रकरणस्थ भीष्मवचनादिभिरपि स्पष्टमवगम्यते ।

तस्मात् अर्हत्तमाग्रिमपूजनाभिहत्यनर्हाग्रिमपूजनलक्षणव्यतिक्रमोऽहङ्कारादिभिर्न कदाचित् केनचिदाचरणीय इति यादवराज नियम्य तेन तथा व्यवस्था कारयामास ।

त एत आचार्यपुरुषा वशपरपरया दिव्यदेशपालकतया स्थापनीया ॥ यतीन्द्रैकाङ्गिनश्चोत्तरोत्तरमित्थमेव इयन्त एव वा कालविशेष देशविशेषायत्त वैभवातिशयमूलकार्यबाहुल्ये त इतोऽप्यधिकावा सस्थापनीया तत्तत्कालकार्यनिर्वाहिभि ।

एतेष्वित्थं स्थाप्यमानेषु ये पुनः कलिदोषाद्वा प्राचीनप्रबलकर्मबलाद्वा कदाचिदुत्पथगामिनः स्युः ते तदितरैः समुचितदेशकालचरितज्ञैर्धार्मिकाग्रेसरैर्ब्रह्मविदग्रेसरैस्सर्वैरपि संहतैः धर्मलोपमालोचयद्भिर्निर्विशङ्कं स्वाधिकारात् च्यावनीया इति च व्यवस्थां स भगवान् रामानुजमुनिः श्रीवेंकटाद्रौ श्रीशैलपूर्णार्यशिष्यस्य प्राक्कृतधर्ममर्यादोल्लङ्घनं श्रीरङ्गे स्वात्मनोऽपि भगवद्द्रव्यापहारलोलुपेन केनचित्कृतं विषप्रदानं अर्थाशया देहिनां सर्वपापप्रवृत्तिदर्शनं प्राचीनानामर्वाचीनानां च महात्मनामपि काममूलविरुद्धप्रवृत्तिदर्शनंच निदर्शिनीकृत्य कादाचित्कधर्ममर्यादातिलङ्घनं सर्वेषामपि संभावितमुपपादयन् तेनैव यादवराजेन कारयामास ।

इत्थं व्यवस्थाप्य स भगवान् रामानुजमुनिः भगवन्तं श्रीनिवासमभ्यनुज्ञाप्य श्रीरङ्गं जिगमिषुर्यादवराजमाहूय संप्रति इह विद्यमानेष्वयमनन्तार्य एव सर्वप्रकारतः उत्कृष्टतम आर्यः तदस्तन्नियमनानुरोधेन सर्वं परिपालयेति तं नियम्य अनन्तार्यमाहूय भो अनन्तार्य त्वमेवेहाद्य वृद्धशिरा असि तावकीनानिमान् शठकोपयतीन्द्रप्रभृतीनपि तत्तत्कैङ्कर्येषु यथाक्रमं चोदयन् परिपालय । तव स्थाने त्वदीया इव मम स्थाने शठकोपयतीन्द्रादय इवच श्रीशैलपूर्णार्यस्थानेऽपि केचिच्छ्रीनिवासकैङ्कर्यपरतया स्थापनीयाः । तादृशाश्च केचिदिहाद्य न सन्तीत्येतदेव मे न्यूनं प्रतिभाति तदपि कदाचित्त्वं परिपूरय । शठमर्षणकुले अवतीर्णो भगवान् श्रीनाथमुनिः भगवद्भक्ताग्रेसरो भूत्वा तदानीमनतिबहुलशाखं शठमर्षणगोत्रभवं कृत्स्नमपि तत्कालस्थितकुलजालं स्ववशमानयन् ।

मा जनिष्ट सनो वंशे जातो वा द्रागविपद्यताम् ।
आजन्ममरणं यस्य वासुदेवो न दैवतम् ॥ इति किल संकल्पयामास ।

श्रीनाथमुनिदिव्यचरणसंबन्धी श्रीकुरुकापालतातसूरिः वीरनारायणपुरे योगं कुर्वाणे अस्मत्परमाचार्ये श्रीयामुनमुनौ तत्सकाशाद्योगरहस्यं जिघृक्षयोपगम्य तत्समाधिभङ्गभिया कुड्यान्तरितदेशाव-

स्थिते समाधौ स्वभुजयुगमानम्य कुड्यान्तरितदेशे कश्चित्पुरुषमवलोकयन्तं भगवन्त साक्षात्कुर्वन् झडिति समाधित उत्थाय मुखमावलम्ब्य किं शठमर्षण-कुलज· कश्चिदिहागत इति ब्रुवाण· ततस्तस्मिन् दासोऽहं यामुन एषआगतोऽस्मि इत्यभिदधानएवागत्य स्वीयचरणयोर्निपत्य स्वामिन् कुड्यान्तरित-प्रदेशस्थित दासजन कथ व्यज्ञासीरिति विज्ञापयति योगदशाया दासेन स्वैरमनुभूयमानोहि भगवान्निजमहामहिष्या स्वपयोधरेण सान्द्रगाढं सश्लेषणेऽपि तन्मुखमवीक्षमाणोऽद्य मम भुजयुगमानम्य त्रिचतुरान् वारान् मुखमुत्क्षिप्योत्क्षिप्य कुडयान्तरित प्रदेशमालोकयत् । ततो येन केनचित् शठमर्षण कुलजेनेहागतेन भवितव्यमिति व्यचिन्तयम् इति प्रतिब्रुवाण श्रीमन्नाथमुनि-सकल्पं भगवताऽपि सफलमेव कृत व्याचख्यौ । अतस्तादृशे भगवत्प्रियतमे श्रीनाथमुन्यभिमानाभिजने शठमर्षणकुले जात कञ्चिदिह यथावसर स्थापयेति नियम्य शठकोपयतीन्द्रमाहूय भो शठकोपयने चतुर्भिरेभिरेकाङ्गिभिस्सहान-न्तार्यनियमनानुरोधीसन् श्रीवेंकटनाथदिव्यैश्वर्य श्रीचक्रवर्तिकुमारदिव्याराधनं च निरवद्य निर्वर्तयस्वेति च नियम्य श्रीवेंकटाद्रेरवरुरोह ॥

तत· श्रीपद्पुर्या श्रीगोविन्दराजमपि श्रीगोदादेव्यासह अभिवन्दमानस्तदीयदिव्यैश्वर्यमपि निरवद्य निर्वर्त्यमानमालक्ष्य बहुलमानन्द भजमानः यादवराजमाहूय भोयादवराज श्रीगोविन्दराजश्रीवेंकटगिरिमहाराजावुभावपि शैवजनकृतमहोपद्रवसागर प्राप्य कथंचिदुत्तीर्णौ पुनर्यथा तादृशमहोपद्रवप्रसङ्ग न भजेयातां तथा परिपालय । अचक्राङ्किताना देवतान्तरपराणा तत्तद्देवकार्यदर्शनाधिकारादिप्रदानमुखेनापि वा कदाचित् कथचिदपिवा अस्मिन् दिव्यदेशे प्रवेशावकाश मा दा· ।

इदानीमिमं दिव्यदेशमुत्सृज्य गच्छता प्रेमातिशयमूलमहानर्थाशङ्किना मया तव क्रियमाणामिमामाज्ञा पुरा कदाचिद्विरोधिनिरसनार्थं द्वारकामुत्सृज्य-गच्छता भगवता श्रीकृष्णेन—

चक्राङ्किता प्रवेष्टव्या यावदागमनं मम ।
नामुद्रिता· प्रवेष्टव्या यावदागमनमम ॥

इति द्वारकापुरीद्वारस्थाना कृना दिव्याज्ञामिव मन्यमानः सावधानं तिष्ठेतिनियम्यकृपामेदुरशीतलकटाक्षैस्तमनुगृह्णन् परिपूर्णमङ्गलाशासनेन च अभिनन्दयन् स रामानुजमुनिःविरहासहिष्णुभिरनन्तार्यशठकोपयतीन्द्र यादवराजप्रभृतिभि र्बाष्पपूरितलोचनैस्सुदूरमनुव्रज्यमानः स्वयमपि बाष्पपूर्णलोचनः कथंचित्ताननुज्ञाप्य श्रीरङ्गदिव्यनगरमेव जगाम ॥

**अथ श्रीवेंकटनाथदिव्यालये श्रीरामानुजार्चा दिव्यमङ्गलविग्रहप्रतिष्ठापन तद्विषय प्रबन्धानुसन्धान वृत्तान्त उच्यते ॥**

इत्थं श्रीरामानुजदिव्याज्ञानुसारेण श्रीवेंकटाद्रिदिव्यदेशे सर्वधर्मव्यवस्थास्वविकलं निर्वर्तमानासु श्रीरामानुजमुन्यवतारसमाप्तिं कदाचित् केनचिद्वैष्णवेन कथितामाकर्णयन्ननन्तार्यः प्रक्षुभितमानसः एकं संवत्सरं पितरंप्रति पुत्रइव कृतशोकदीक्षः श्रीरामानुजनन्दनवनकैंकर्यमप्युपेक्षमाणः श्रीवेंकटनाथमप्यवन्दमानएवातिष्ठत् ॥

तदा भगवता श्रीवेंकटनाथेनापि परमंशोकमापन्नेन परमकरुणया अर्चकमुखान्नियमितेन दूतेन कथंचिदावाहितोभगवत्संनिधिमुपगतो महति शोकसागरे निमज्जन् अनुन्नमितमुखएव तिष्ठन्ननन्तार्यः भो अनन्तार्य अहंकिल श्रीरामानुजमुनिरूपं कंचनमहानिधिमेव दैववशात्परित्यक्तवानस्मि । तवतु तत्स्थाने अहमेवास्मि त्वं शोकं माकृथाः । तवतु न कापि हानिर्भविष्यति । तव मनोरथजातं सर्वमहमेव निर्वर्तयानीति परमादरेण सान्त्वयित्वा निरन्तरं कुसुमपटल घुमुघुमित निजदिव्यचरणयुगल श्रीशठकोपतीर्थप्रसादाद्यर्पण सपर्यया सत्कृतः किंचिदुन्नमितमुखः श्रीवेंकटनाथमुखचन्द्रमण्डलं सादरं निरीक्षमाणो भगवन्तं व्यज्ञापयत् ; भगवन् श्रीवेंकटनाथ श्रीनिवास श्रीरामानुजमुनिमुद्दिश्य मयाक्रियमाणमिदंविज्ञापनं भवतानिर्वर्तनीयमिति प्रार्थयामीति ।

ततो भगवता कथ्यतां भगवन्मनोरथो निश्शङ्कमित्यभिहितोऽनन्तार्यः भगवन् 'तमसः परमोधाता शङ्खचक्रगदाधरः' इति सर्वस्मात्परत्वासाधारण चिह्नतयाऽभिहितावपि सुदर्शनपाञ्चजन्यौ परमकरुणया कल्यादौ कस्मैचिदा-

श्रिताय तोण्डमाश्चक्रवर्तिनाम्ने दुर्विषहशत्रुगणभीरवे तच्छत्रुनिषूदनाय प्रादा ॥

तमिमं भवतो महौदार्यगुणमजानन्तो मुग्धा इमे लोकास्त्वयि स्वासाधारणश्रीसुदर्शनपाञ्चजन्यादिदिव्यायुधादर्शनेन देवनान्तरत्वेनान्यथा प्रतिपत्तिकुर्वाणा, विनष्टमतयोऽभवन् ॥ तेषा यथावत्परत्वप्रतिपत्तिपूर्वकसमुज्जीवनसिद्धये शैवजनकोलाहल विनिर्धूय महताप्रयासेन यादवराजमपि पदवीमुपनीय यथापुर त्वा श्रीशङ्खचक्रे भगवान् किल रामानुजमुनिरङ्गीकारयामास ॥

एव भवतो निर्दोषनित्यमङ्गलगुणगणनिधेर्निर्गुणत्वादिदोषान् ब्रुवाणाना बाह्यकुदृष्टीनां विधूननाय भवन्त स्वाधीनत्रिविधचेतनाचेतनस्वरूपस्थितिप्रवृत्तिभेद निखिलजगदुदयरक्षाप्रलयमयलील निखिलवेदान्तप्रतिपाद्य अखिलहेयप्रत्यनीकज्ञानानन्दस्वरूप अप्राकृतदिव्यमङ्गलविग्रहविशिष्ट समस्तकल्याणगुणगणात्मक श्रीभूमिनीलानायक ब्रह्मरुद्रादि सर्वसमाश्रयणीय उभयविभूतिनिर्वाहक मोक्षप्रद नित्यमुक्तानुभाव्यच सकलवेदान्तगणैरुपपाद्य श्रीभाष्यादिप्रबन्धाश्च प्रणीय यथावस्थितज्ञानमुपनीय अयकिल जगदपालयत् करुणया ।

ततस्तस्यैतस्य निखिलजगन्महोपकारस्य भगवतोरामानुजमुनेर्गुणगणविषय प्रपन्नगायत्री समाख्यया विख्यात अष्टोत्तरशतगाथात्मकं श्रीरामानुजशतान्ताद्यपरनामान श्रीरङ्गामृतसूरिप्रबन्धमपि श्रीमत्यद्ध्ययनोत्सवे पृथगेकस्मिन् दिने समाकर्णयितुमर्हसि ॥

दिव्यसूरिणा श्रीवेंकटगिरिमारुह्य भवन्मङ्गलाशासनाकरणन्यूनता परिहतये निरन्तरश्रीरामानुजमुनिसम्बन्धिभवन्मङ्गलाशासननिष्पत्तये कलिदोषाभिवृद्धबाह्यकुदृष्टिकुहनानिरसनायच श्रीरामानुजमुनिमर्चारूपेणास्मिन् दिव्यदेशे प्रतिष्ठापयितुमनुमन्यस्वेति प्रार्थनामकार्षीत् ॥

इत्थमभ्यर्थितो भगवान् श्रीवेंकटनाथ सुप्रहृष्ट भो अनन्तार्य भवताप्रार्थ्यमानमिद वरद्वय ममातीवप्रियतमम् मदीयपराङ्कुशपरकालादिदिव्य-

सूरिप्रबन्धगण इव मदीयरामानुजमुनिविषयप्रबन्धोऽपि श्रीमत्यद्ध्ययनोत्सवे पृथगेव एकस्मिन् दिवसे प्राधान्येन अनुसन्धीयताम् स्वैर प्रपन्नै ।

श्रीरामानुजमुनिरपि भवन्मनोरथानुगुण्येन मदीयमन्दिरएव कचिद्भागे अनन्तगरुडविष्वक्सेनादिवदर्चारूपेण यथाविधि प्रतिष्ठाप्यतामिति प्रत्यवोचत् ।

तत अनन्तार्योऽपि भगवत्कटाक्षविशेषेण सप्रहृष्टमना पुरा स्वाभिमतिविशेषानुगुण्येन श्रीरामानुजमुनिना अद्ध्ययनोत्सवचरमदिवसे पृथगनुसन्धेयतया नियमितस्य श्रीमधुरकवि दिव्यसूरिदिव्यप्रबन्धस्यानुसन्धानदिवसमनन्तरदिवसे श्रीरामानुजजनान्तादिप्रबन्ध पार्थक्येनानुसन्धेय व्यवस्थाप्य तत पश्चात्प्राग्रामानुजमुनिनियमित श्रीशैलपूर्णार्यवृत्तान्तविशेषप्रत्यभिज्ञापक शीतलतीर्थामृताभिगमयात्रोत्सव कर्तव्य व्यवस्थाप्य प्राक् स्वस्मै श्रीरामानुजमुनिना गाढममालिङ्गनेन सत्कृत्यदत्त तदाप्रभृति स्वमन्दिरे सादर समाराद्ध्यमान तदीयदिव्यमङ्गलविग्रहमेव श्रीवैखानसागमोक्तरीत्या यथाविधिसस्कृत्य भगवद्दिव्यालयएव वामपार्श्वे कचिन्मण्डपे प्रतिष्ठाप्य तत्पादारविन्द युगलशिरस्कापादुकामपि काचित्प्रतिष्ठाप्य 'श्रीमद्रामानुजाचार्य श्रीपादाम्भोरुहद्वय', मित्यादि भगवद्वचनप्रामाण्येन स्वस्य श्रीरामानुजमुनिपादारविन्द रूपताया 'रामानुजपदच्छाया गोविन्दाह्वानपायिनी', इत्यादि वचनप्रामाण्येन गोविन्दार्यस्य तदीयपादच्छायारूपताया 'पादुकेयतिराजस्यकथयन्ती मदाह्वया', इत्यादिवचनप्रामाण्येन दाशरथिसूरे तदीयपादुकारूपतायाश्च व्यवस्थितत्वेऽप्यस्मिन् दिव्यदेशे स्वाभिमानातिशयेन पादारविन्दतच्छायाविशिष्टायास्तत्पादुकाया अनन्तार्य इति स्वसज्ञामेवकृत्वा इत्थमनेकश्रीवैष्णवदर्शन सबन्धिधर्माननेकानभिवर्धयन्—

सर्वदेश दिशाकालेष्वव्याहतपराक्रमा ।
रामानुजार्यदिव्याज्ञा वर्धतामभिवर्धताम् ॥

रामानुजार्यदिव्याज्ञा प्रतिवासरमुज्वला ।
दिगन्तव्यापिनी भूयात् साहि लोकहितैषिणी ॥

इति प्रतिसमय भगवत्सनिधौ श्रीरामानुजार्यदिव्याज्ञाभिवृद्धिमेवप्रार्थ-यन् श्रीवेंकटनाथमङ्गलाशासनैकपरायण तदीयगुणानुभवकैङ्कर्याणिच कुर्वाण. सुखमवात्सीत् ।

**अथ श्रीवेङ्कटाद्रिदिव्यालयादिषु श्रीमदध्ययनोत्सवादिषु कृत्स्न दिव्यप्रबन्धानुसन्धानप्रसङ्गेषु प्रथमदिव्यसूरि दिव्यप्रबन्धोपक्रमपूर्वक-मितरदिव्यसूरिप्रबन्धानुसन्धानस्य अन्ते पृथगेकस्मिन्दिवसे श्रीमधु-रकविदिव्यसूरिप्रबन्धानुसन्धानस्य च निमित्तभूतवृत्तान्त उच्यते ॥**

कदाचन श्रीरामानुजमुने॰ दिव्यसूरिदिव्यप्रबन्धोपदेशाचार्यभूत सप्तशतद्राविडकविवरमूर्धाभिषिक्त श्रीरङ्गनाथदिव्यमङ्गलविग्रहदिव्यसौन्दर्यानु-भवविद्धहृदय देवगानमर्यादया दिव्यप्रबन्धगानकुशल ततएवहेतो श्रीयामुन-मुनिना दत्तमुनिवाहनापरनामधेय श्रीशठकोपश्रीरङ्गराजविज्ञप्तिकर इति-विख्यात आर्यचूडामणि. कदाचित् श्रीरङ्गक्षेत्रे श्रीकार्तिकमहोत्सवे भगवत॰ श्रीरङ्गनाथस्य मङ्गलाशासन कृत्वा श्रीरामानुजयतीन्द्रस्य मठमुपगत तेनच प्रत्युत्थान प्रणामादिभि सत्कृत भो रामानुजमुने ! श्रीवेङ्कटगिरिदिव्ययात्रा-विशेषत प्रशसन्ति दिव्यसूरय ।

यथावा भगवान् पराङ्कुशनामा दिव्यसूरिचूडामणि श्रीमुखसूक्ताख्य-निजद्राविडसहिता तृतीयकाण्ड तृतीय श्रीमुखसूक्तदशमगाथाया—

क्लृप्तायुर वधि सनिधिमुपगम्योपेत्य करणशैथिल्यम् ।
दौर्बल्यमजनत प्राग्विस्तृतफणितल्प वेंकटव्रजत ॥
सान्द्राराम मनोहरकुसुममयी योबिभर्ति विपुलतटी ॥ इति ।

आहच भगवान् षड्दर्शनपारावार सारासारपारदृश्वा भक्तिसारदि-व्यसूरि. चतुर्मुखश्रीमदन्तादिसज्ञित निजद्राविडसहिताद्विचत्वारिंशगाथाया,

गत्वा प्रणमत नितरामुत्तुङ्गवेंकट स्थिरीभूय ।
पापापहर शीलत्सदा सुगन्ध्यब्ज सनिकर्षगतः ॥

चतुराननस्त्रिनेत्रस्तत्राखिलदेवदैत्यवन्द्यस्य ।
द्वावपि विष्णोरङ्घ्र्यो कमलानि समर्प्यकलयतस्तोत्रम् ॥ इति

प्रतिपादयतिचसएव श्रीमच्छन्दोवृत्याख्य निजद्राविडसहितैकाशीति-तमगाथाया—

मथितदुग्धाम्भोनिधिमधिशय्य च कालनेमिमपिजित्वा ।
क्षुभितैन्द्रद्यनुजसहायीभवितु समुपेत्य राघवीभूय ॥

निबिडान् सप्तच वृक्षान् विध्वाबाणेन वेकटं गन्तु ॥
पत्यु पादावेव प्राप्य प्रतिवासर समाश्वसनेति ।

इत्थमेव बहुपुस्थलेषु दिव्यसूरिभि सानुरागहर्षे शमिता श्रीवेंकटाद्रियात्रा कृत्वा समागमिष्यामि इत्यभिदधान श्रीरामानुजमुनिनाऽभ्यनुज्ञात श्रीवेंकटाचलप्रति प्रस्थितो मध्येमार्गे श्रीकाञ्चीमहानगरे महादयापाल श्रीदेवराजनाम्ना विख्यात भगवन्त अर्थितार्थपरिदानदीक्षित वरदमभिवन्द्य श्रीवेंकटगिरेरुपत्यकाया श्रीपद्पुरीमासाद्य श्रीरामानुजमुन्यभिमतविषय भगवन्त श्रीगोविन्दराजप्रणम्य श्रीवेंकटाद्रिसमारोहणसरणि सोपानारम्भस्थलस्थित श्रीतिन्त्रिणीवृक्ष तन्मूलेगाण्डशैले विराजमानभगवद्दिव्यचरणारविन्दयुगल तत्परिसरे विराजमानान् श्रीपराङ्कुशपरकालादिदिव्यसूरीश्च अभिवन्दमान तत श्रीवेंकटाद्रिमारुह्य मद्ध्येमार्गे विराजमान श्रीकानन नरसिह्मचाभिवन्द्य शिलावरणपर्यन्तगत तत श्रीशैलानन्तार्येणाभ्युद्गत तत परस्पर वन्दनस्वागत योगक्षेमानुप्रश्नपूर्वक तेनसह समाभाषमाण समागत्य श्रीवेंकटनाथदिव्यालयमहाद्वारसम्मुखे प्रणम्य महावीधिषु प्रदक्षिण समागत्य श्रीमत्या स्वामिपुष्करिण्या स्नात्वा कृतनित्यकृत्य श्रीवृत्ताख्य श्रीपराङ्कुशदिव्यसूरिसहितायाम् ।

हीनोक्तिर्वा भवतु प्रलयपयोधे प्रलोलकल्लोले ।
कृत्स्नं जगद्वराहीभूयसमुद्धृत्य कृतमहोपकृतिम् ॥

सुमहाकल्पकवाटी सपत्नानां दिवौकसाचापि ।
अन्येषा मनुजानामपि सर्वेषा ततोऽपराणाच ॥

विशदविलक्षण विलसद्विज्ञानविधान विरचितोपकृतिम् ।
अधिदेवमन्तरेणहि न मया दृष्ट मनोहरं वस्तु ॥

इत्येवमर्थया एकोनशततमगाथया तदभिमतस्य श्रीमतोज्ञानवराहस्य मङ्गलाशासन कृत्वा पुन श्रीवेङ्कटनाथदिव्यालयमहाद्वारसम्मुखे प्रणम्य सेवाक्रमेण श्रीमतिभगवद्दिव्यालये श्रीबलिपीठध्वजस्तम्भसनिधौ प्रणम्य श्रीमहानसलक्ष्मी प्रणम्य श्रीतीर्थभूतं श्रीमत्सुन्दरस्वामिकृपापरनामधेय सुवर्णकूप प्रदक्षिणीकृत्य श्रीमदानन्दनिलयदिव्यविमान प्रणम्य प्रदक्षिणीकृत्य श्रीमति कटाहर्तार्थे तीर्थपानकृत्वा विष्वक्सेन प्रणम्य तत श्रीमन्त वेङ्कटनृसिंहदेवच प्रणम्य भगवन्त वैनतेयमपि प्रदक्षिणीकुर्वन् श्रीकृष्णमण्डपमासाद्य द्वारपालकयोस्सनिधो स्थित्वा अलकृत मत्तगजमिवविराजमान महादिव्यसूरि श्रीसूक्ताख्याया श्रीभट्टनाथसूरि सहिताया प्रथमकाण्ड षष्ट श्रीसूक्तदशमगाथोक्तरीत्या सर्वाभरणभूषित श्रीनिधि निर्धना महानिधिमिव दूरत पश्यन् ता गाथामनुसदधानएव सहर्षपुलकोद्गम प्रणम्य द्वारान्त प्रविश्य स्वाचार्यभूत श्रीयामुनाचार्य प्रणीतस्तोत्ररत्न —

कदा पुन शङ्खरथाङ्गकल्पक-
ध्वजारविन्दाङ्कुश वज्रलाञ्छनम् ।
त्रिविक्रम त्वच्चरणाम्बुजद्वय
मदीयमूर्धान मलकरिष्यति ॥

इत्यन्तमनुसदधान भगवता श्रीवेङ्कटनाथेन एव 'समहात्मासुदुर्लभ' इत्युक्तमधिकारिविशेष मन्वानेन अर्चकमुखेन शठकोप श्रीरङ्गराजविज्ञप्तिपकरार्यमाहूय अङ्घ्र्योरधस्तादनुरूप प्रविश्य भो दासा वर्धध्वमिति श्रीमुखसूक्ताख्य श्रीपराङ्कुशदिव्यसूरि सहिता षष्ठकाण्ड दशम श्रीमुखसूक्तैकादश गाथोक्तरीत्या नियमितस्सन् परमहर्षपरिपूरितान्तरङ्ग सानिकर्षमुपगच्छन् राजश्रीसूक्ताख्यसहिताया चतुर्थ श्रीसूक्तनवमगाथाया 'सोपानीभूयशयित्वा त्वत्प्रवालाधर पश्येयमिति, श्रीकुलशेखरदिव्यसूरिकृतमनोरथविशेषमनुसदधान तत्रस्थित-

स्वर्णसोपान श्रीकुलशेखरदिव्यसूरिमेवानुसन्धाय तदनतिलङ्घ्य तत्पार्श्वएव-स्थित दर्शितदशम श्रीमुखसूक्तिमादित प्रभृत्यनुसदधान तद्दशमगाथोक्त-रीत्या पद्मोपरिकुमारीपरिष्कृतवक्षस्क त्वदङ्घ्रयधस्तादनुरूप प्रविष्टोऽस्मीति लक्ष्मीपुरुषकारपूर्वक प्रपत्ति कृत्वा दिव्याभरणसौन्दर्य पादादिकेशान्त-दिव्यावयवसौन्दर्यचानुभवन् ततो भगवता श्रीवेङ्कटनाथेन तीर्थप्रसाद श्रीशठ-कोप शेषवस्त्र निरन्तरकुसुमपटलघुमुघुमितनिजदिव्यचरणारविन्दयुगल-प्रदानादिसपर्यया सत्कृत्य भो विज्ञाप्तिकरार्य ! अस्मद्रामानुजमुनि दिव्य-प्रबन्धाचार्यभूतस्त्वमस्मदीयनिरतिशयप्रीतिभाजनमसि । तत प्राग्व्यास-पराशरादिभिरिवप्रथमतर प्रथमदिव्यसूरिशब्दितै सरोयोगि भूतयोगि महायोगिसंज्ञितै सूरिभि प्रणीतास्वस्मद्विषयास्वस्मदत्यन्तप्रियासुदिव्यप्रबन्ध-श्रीसूक्तिपुकाचिद्गाथागातुमर्हसीतिनियमित अहो अतिक्षुद्रदास दिव्यसूरि-प्रीतिबलात्कृतोभगवानित्थचोदयन् अनुगृह्णातीति अनुसदधान परमहर्षमवा मुवन् प्रथमदिव्यसूरिप्रबन्धेषु आद्यन्तगाथा द्वितीयश्रीमदन्तादिसहिताष्टा-विंश त्रिपञ्चाशगाथेच देवगानेन गायन् तेन च गानेन मुक्तकृत सामगानेनेव-भगवन्त प्रीणयन् तत सुप्रीतेन भगवता पुनरपि तीर्थ श्रीशठकोपप्रदानादि सपर्ययासत्कृत कृतार्थस्सन् तत श्रीशैलानन्तार्येण भो श्रीशठकोपरङ्गराज-विज्ञप्तिकरार्य भवान् श्व प्रभृति श्रीमदध्ययनोत्सवे दिव्यसूरिप्रबन्धाना श्रीवेंकटनाथ दिव्य श्रवणमनोहरगान देवगानमर्यादया कर्तुमर्हतीति विज्ञा-पित· तदीयविज्ञापन भगवद्दिव्याज्ञामेव मन्वान परदिनप्रभृति भट्टनाथदिव्य-सूरि प्रबन्ध प्रथम श्रीसूक्तमारभ्य यथाक्रम प्रतिदिन प्रबन्धान् गायन् कृतार्थ-स्सन् उत्सवपरिसमाप्तौ श्रीशैलानन्तार्येण विशेषत. परमादरेण सत्कृत श्रीवेंकटनाथालब्धानुज्ञ श्रीरङ्गदिव्यनगरगत्वा श्रीरामानुजमुनिसमीप गत्वा तेनचप्रणामादिभिस्सत्कृतः रामानुजमुने भवत प्रबन्धोपकारकोऽस्मीत्यतो-मयि श्रीवेंकटनाथेन कृतोऽनुग्रहातिशयो वाचामगोचरइत्यभिदधान. श्रीवेंकटनाथस्य प्रथम दिव्य सूरिप्रबन्धगाननियमन तत श्रीशैलानन्तार्यस्या-ध्ययनोत्सवे सकलदिव्यप्रबन्धगान नियमन च सर्व तस्मैनिवेदयामास ॥

एतद्विषयंच श्लोकमित्थमार्याजगुः—

श्रीरामानुजयोगिने समदिशन्मूकोश्शठारेश्शुभा-
श्चाद्यायोनिजयोगिना वृषगिरीशानाज्ञया तत्पुर. ।
भक्त्यागायदुदारधी कविवरस्ता देवगानेन य
श्रीरङ्गेन्द्रगुरु भजे मुनिवहाह्व नाथवशोद्भवम् ॥ इति ।

ततो भगवान् रामानुजमुनिरपि सर्वमिद श्रुत्वा नितरा हर्षमासाद्य मनसि विचार्य प्रथमदिव्यसूरयस्त्रयोऽपि स्वप्रबन्धेपु प्रथम श्रीमदन्तादि सहिताया षड्विशगाथाया ।

उद्गच्छता प्रचलता शुभतुलसीचिह्न मजहतीरीतिम् ।
अनुसन्धायाविरत भजता पापानल प्रशमनेता ॥
वेंकट एव द्युसदा मन प्रदीपप्रचोदयित्रचल । इति ।

सप्तत्रिशगाथाया

दिशिदिशि वैदिकैरुपगम्य सेव्यमानो वेंकट एव धवलशशङ्खापूर्याधरस्याशुत व्यामुग्धस्याभिमत नगरमिति ।

हान्येकयापि विधुरपरमपद प्रदद्यात् भूमिकान्तवतागुणाधिकेनाधिष्ठित श्रीवेंकट इति ।

एकोन शततमगाथाया 'क्षीराब्धिपूरुवासीच वेंकटेस्थितश्च अन्तरङ्गस्थित इत्यनुसन्धेहो'ति ।

द्वीतीय श्रीमदन्तादि सहिताया पञ्चविशगाथायां

स्थितंच वेणूतुङ्ग शीतलतटे वेंकटे परम्पदवासिस्तुत्योतुङ्ग सहजकल्याणगुणेन समागत्येति ।

त्रयस्त्रिशगाथायां ।

अद्ध्यवसिताहि चिन्ता हृदि तुलसीमाल्य भूषितस्य हरेः ।
अनुसन्धाने नाम्नामङ्गं बहुकालमानतौचापि ॥

वेणूत्तुङ्गतटस्य प्रबलश्रीवेंकटाचलस्यैव ।
पत्युर्वागपि गुणगणकीर्तनसरणौ सदैव सचार ॥ इति ।

त्रिपञ्चाशगाधायां वेंकटएव अस्माभिराद्रियमाण पर्वत इति ।

पञ्चसप्ततितमगाधाया—

श्रीवेंकट खल्वभ्रतुल्यवर्णस्य गिरिरिति ॥

तृतीयश्रीमदन्तादिसञ्ज्ञितसंहिताया एकोनचत्वारिंशगाधाया इन्दु-मण्डलसङ्गि प्रवहन्निर्झरप्रकटारवनीरवेङ्कटवासीह्यन्तरङ्गान्तर्वसतीति ॥

एकोनसप्ततितमगाधाया पर्वतकथाप्रसङ्गे वेङ्कट गायतीति च कथनात् । इत्थमन्यास्वपि बहुषु गाधासु श्रीवेङ्कटाचलतन्नाथयो विशेषतोनुसन्धानदर्शनाच्च श्रीवेङ्कटाद्रि तत्र सर्वसुलभतया कृतनित्यसन्निधान भगवन्त च निजनित्यानु-भवविषय स्वयमेव प्रतिपादयन्ति ।

एव ते श्रीवेंकटाद्रियात्रा कुर्वाणा श्रीवेङ्कटाद्रेरुपत्यकाया चिरकाल मङ्गलाशासनपरा भगवदनुभव कुर्वाणास्तस्थुरिति भार्गवपुराणमपि प्रतिपादयति ।

तत पश्चात् श्रीकलिवैरिदिव्यसूरिरपि तेषामन्तरङ्गगताशयानुरोधेन महाश्रीसूक्ताख्य स्वीयसहिताद्वितीयकाण्डाष्टमश्रीसूक्तद्वितीयगाधागतया स्पृह-णीयद्राविडगाधागायिसूर्यभिवन्द्यदेवोय किमिति स्वश्रीसूक्त्या स्पृहणीय-द्राविडगाधागायिसूर्यभिवन्द्यदेवत्वेन श्रीवेंकटनाथविषयया स्पृहणीयद्राविड-गाधागायिसूरित्वेनाभिमताना प्रथमदिव्यसूरीणा त्रयाणामपि श्रीवेंकटनाथ एवानुभाव्यविषय इति प्रकाशयामासेत्यशश्च श्रीरङ्गनाथशिष्यपरम्परा सम्प्रदायतोऽवगम्यते ।

अत. प्रथमदिव्यसूरीणां प्रबन्धाः तदीयभावबन्धानुगुण्येन श्रीवेङ्क-टनाथैकप्रधानविषया अवगम्यन्ते ।

अत एव च श्रीवेङ्कटनाथोऽपि तेषामेव गान श्रोतु श्रीशठकोपरङ्गराज-विज्ञप्तिकरार्थं तदानाय चोदयामासेत्यनसन्दधानः श्रीनाथमनिवंश्यं कञ्चि द्विज-

प्तिकरमाहूय तस्य च श्रीशैलेशविज्ञप्तिकरार्य इति नामधेयं च विधाय भो श्रीशैलेशविज्ञप्तिकरार्य इत प्रभृति श्रीवेङ्कटाद्रौ कृतनित्यवास त्व दिव्यसूरि-प्रबन्धान् देवगानमर्यादया प्रतिदिनं श्रीवेङ्कटनाथसन्निधौ गायस्तं अभिनन्दय ।

श्रीवेङ्कटनाथेन श्रीशठकोपरङ्गराजविज्ञप्तिकरार्य प्रति स्वविषयप्रथमदिव्य-सूरित्रयप्रबन्धगानस्य प्रथम कर्तव्यतया साक्षादेव नियमनात् इतउपरि प्रतिसवत्सर श्रीमदध्ययनोत्सवादि कालेषु कृत्स्नप्रबन्धाध्ययनप्रसङ्गे श्रीवेङ्कटाद्रि दिव्यदेशप्रधानविषयप्रथमदिव्यसूरिप्रबन्धोपक्रम गेयच्छन्दोभिधानप्रबन्ध-राश्यनुसन्धान प्रथमदिने कृत्वा परदिनप्रभृति श्रीरङ्गनाथदिव्यालयवत् श्रीभट्टनाथदिव्यसूरिप्रबन्धप्रथमश्रीसूक्तमारभ्य तदितरप्रबन्धाननुसन्धाय तत एकादशीप्रभृति दशसु दिनेषु एकैकश श्रीमुखसूक्तप्रबन्धकाण्डाननुसन्धाय समाप्य तत परदिने प्राक्श्रीशठकोपदिव्यसूरिणा श्रीमुखसूक्ताख्य-प्रबन्धतृतीयकाण्ड तृतीयश्रीसूक्तप्रथमगाथाया प्रार्थित श्रीवेङ्कटनाथस्य सर्वदेश-सर्वकालसर्वावस्थोचिताशेष शेषवृत्तिरूपकैङ्कर्य तदीयमनोरथपूरणीयकुर्वाणेन मुमुक्षूणा सकलश्रीवैष्णवाना दिव्यसूरिसूक्तिनित्यानुसन्धानसिद्ध्यै दिव्यसूरि-दिव्यसूक्तिप्रवचनं कुर्वाणेन श्रीपराङ्कुशदिव्यसूरौ श्रीमधुरकविदिव्यसूरिवच्चरम-पर्वनिष्ठा भजमानेन तादृशनिष्ठाप्रतिपादकतदीयदिव्यप्रबन्ध तदुक्तार्थ-यथावदनुष्ठानसावधानमनुदिनमनुसन्दधानेन तादृशनिष्ठाभजनाधीन भगवत्क-टाक्षविशेषभाजनतया स्वात्मात्मीयाना नियतधार्यतया व्यवस्थापित-मधुरकविदासनामधेयेनानन्तार्येण सादरमनुसन्धीयमानो मधुरकविदिव्यसूरि-प्रबन्ध प्राधान्येन पृथगनुसन्धेय इति व्यवस्थाप्य अनन्तार्याय श्रीमुखपत्रिका-मपि विलिख्य दत्वा त विज्ञप्तिकरार्य श्रीवेङ्कटाद्रि प्रति प्रस्थापयामास ॥

तदनु स च श्रीशैलेशविज्ञप्तिकरार्योऽनन्तार्याय दत्तां श्रीमुखपत्रिकां शिरसा गृहीत्वा सकुटुम्बः श्रीवेङ्कटाद्रि आसाद्य प्रथममनन्तार्यमासाद्य परस्परवन्दनकुशलप्रश्नादिकरणसमनन्तरं श्रीरामानुजमुनिदत्ता श्रीमुखपत्रिकां च दत्वा श्रीरामानुजमुनिसन्दिष्टं वृत्तान्तजातमपि न्यवेदयत् ।

ततोऽनन्तार्यस्ता श्रीमुखपत्रिकां शिरसा गृहीत्वा परमादरेणाभिवीक्षमाण· श्रीशैलविज्ञप्तिकरार्येण सह श्रीवेङ्कटनाथसन्निधि गत्वा भो श्रीवेङ्कटनाथ दिव्यसूरिदिव्यप्रबन्धा प्रतिदिनं श्रीमत्यध्ययनोत्सवे च भवत्सन्निधौ देवगानेन गातव्या इति नियम्य भवन्नाम्ना कृतनामधेय कञ्चन विज्ञप्तिकर सम्प्रेष्य श्रीमुखपत्रिकामपि सम्प्रेष्य भवत्सन्निधौ दिव्यसूरिदिव्यप्रबन्धगान-व्यवस्थापनाय मामाज्ञापयति भगवान् रामानुजमुनि तदीयं नियमन मया निर्वर्त्यमान भवता कृपया सादरमङ्गीकर्तव्यमिति भगवन्त सम्प्रार्थ्य तेन चार्चकमुखेन भो अनन्तार्य श्रीरामानुजमुनिकृपाविशेषभाजने भवति मामकीन: कृपाप्रवाहो धाराल प्रवहति श्रीरामानुजमुनिनियमितदिव्यप्रबन्धगान यथाविधि व्यवस्थाप्य यथामनोरथ निर्वर्तय ।

अह च श्रीरामानुजमुनिनियमन परमादरेण स्वीकरोमीति नियमित श्रीरामानुजमुनि श्रीमुखपत्रिकालिखितदिव्याज्ञानुरोधेन प्रतिसवत्सर अध्ययनोत्सवे प्रथम प्रथमदिव्यसूरिप्रबन्धोपक्रमपूर्वक गेयच्छन्दोऽभिधान प्रबन्धराशिमनुसन्धाय ततोऽन्यान् दिव्यसूरिप्रबन्धाननुसन्धाय तत श्रीमुखसूक्तसहिता प्रतिदिनमेकैककाण्डक्रमेण दशसु दिनेषु अनुसन्धाय समाप्य तत परदिने स्वाभिमत श्रीमधुरकविदिव्यसूरिप्रबन्ध प्राधान्येन पृथगनुसन्धेयतया च व्यवस्थाप्य तथैव निर्वर्तयन् श्रीवेङ्कटनाथमानन्दयन् त श्रीशैलेशविज्ञप्तिकरार्यं तत्रैवावासयत् ॥

**इत्यनन्तार्यगुम्भितायां श्रीवेङ्कटाचलेतिहासमालायां**
**सप्तमस्तबक ॥**

**श्रीमते रामानुजायनम· ॥**

G. S PRESS, MOUNT ROAD, MADRAS

# शुद्धाशुद्धपत्रिका

| | शुद्ध | अशुद्ध | Page | Line |
|---|---|---|---|---|
| 1 | विशेषतो | विशषतो | 3 | 13 |
| 2 | वैखानस | वैरवानस | do | 14 |
| 3 | नगरी | नगिरी | 6 | 4 |
| 4 | शास्त्रानुसारेण | शास्त्रानुरसारेण | 7 | 19 |
| 5 | दृष्टवानसि | ददृष्टवानसि | 8 | 24 |
| 6 | अम्बरीषादिभि. | अम्बरीपादिभि. | 10 | 19 |
| 7 | उपोद्धाते | उपो द्घाते | 12 | 24 |
| 8 | शब्द | शष्द | 21 | 17 |
| 9 | विशाङ्क | विशाङ्क | 29 | 3 |
| 10 | पद्मनाभोऽथ | पद्धनाभोऽथ | 31 | 18 |
| 11 | सप्रति | सप्रति | 32 | 17 |
| 12 | आराध्यत्वेन | अगराध्यत्वेन | 39 | 4 |
| 13 | अद्याप्यत्र | अद्याप्यत्र | do | 22 |
| 14 | शङ्खचक्र | शाङ्खचक्र | 41 | 24 |
| 15 | शक्त्यायुध | शक्यायुध | 58 | 1 |
| 16 | क्षितीशेन | क्षिताशेन | 64 | 13 |
| 17 | नासौ | नासा | 70 | 1 |
| 18 | किञ्चित्पुरस्तत् | किंचिन्तरस्वात् | do | 16 |
| 19. | रुद्रस्य | रुद्रस | 75 | 2 |
| 20 | —दिग्विति | —दिष्टिति | do | 5 |
| 21 | समालिङ्गित | समालिङ्गत | 83 | 17 |
| 22 | वासक्लेश | वासस्वश | 84 | 4 |
| 23 | संस्थाप्य | संस्थाप्य | 89 | 4 |
| 24 | पाद्मोत्तर | पाद्योत्तर | 93 | 16 |
| 25 | भूदेव्यंशा | भूदेव्यशा | 97 | 13 |
| 26 | समर्पित | सपपितं | 117 | 8 |
| 27. | —श्लेष | —श्चछेष | 119 | 8 |
| 28 | क्षुभितेन्द्रयनुज | क्षुभितेन्द्रयनु | 130 | 22 |
| 29 | त्वरमाणेषु | त्वरद्माणेषु | 149 | 6 |
| 30 | —वगच्छन् | —वगछन् | 158 | 11 |
| 31 | वेदबाह्यैश्च | वेदब्राह्यैश्च | 162 | 1 |
| 32 | शासन | शाशन | 168 | 7 |